# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




५७ वर्षे
१ - २ अङ्कौ

ज्येष्ठ - भाद्रपदपूर्णिमे
जून-सितम्बर, २००२ ई.

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

सम्पादकौ

डॉ. राजारामशुक्लः
निदेशकः, अनुसन्धानसंस्थानस्य

डॉ. हरिश्चन्द्रमणित्रिपाठी
निदेशकः, प्रकाशनसंस्थानस्य




५७ वर्षे
१-२ अङ्कौ

वार्षिकं मूल्यम् - १०० रूप्यकाणि
जून-सितम्बर, २००२ ई.



*प्रकाशकः —*

**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी - २२१००२

*मुद्रकः —*

**श्रीजी प्रिण्टर्स**
नाटी इमली
वाराणसी - २२१००२

*प्राप्तिस्थानम्—*

**विक्रय-विभागः**, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२

# सम्पादकीयम्

अथेदं प्रकाशमानीयमानं सारस्वत्याः सुषमायाः सप्तपञ्चाशवर्षस्यादिमाङ्क-युगलं विदुषां समीक्षकाणां करकमलेषूपायनीकुर्वन् अमन्दमानन्दमनुभवामि। सारस्वती सुषमा हि स्थापनायाप्रभृत्येव विश्वविद्यालयस्य, एतद्विश्वविद्यालयीयानामन्येषाञ्च विदुषां महत्त्वपूर्णैः शोधालेखैर्बहूपयोगिभिः संस्कृतवाङ्मयमहोदधे रत्नभूतै-र्विशेषतो विश्वविद्यालयीयसरस्वतीभवनस्थपाण्डुलिपिमाश्रित्य सम्पादितै-र्लघुग्रन्थैश्च समध्युषिता विश्वविद्यालयस्यास्य सारस्वतीं सुषमां वर्धयन्ती विराजत इति नास्ति तिरोहितं कस्यापि। इदमस्या अङ्कयुगलं दशशोधनिबन्धैर्लघुग्रन्थरत्नेन चैकेनालङ्कृतं शोभते। तत्र प्रथमतो विश्वविद्यालंयस्यास्य कुलपतिवर्याणां कविमूर्धन्यानाम् **आचार्यश्रीराजेन्द्रमिश्र**महाभागानां कृतिः **'उत्तरबाणभट्टकथा'** इति समलङ्करोत्येनाम्। महाकवेर्बाणभट्टस्य कान्यकुब्जपरित्यागं निमित्तीकृत्य तद्बीजत्वेन महाराजश्रीहर्षस्य सौगतमते श्रद्धातिशय एव प्रतिपादितो मनीषिणा लेखकेन, तत्प्रसङ्ग एवान्यदत्तोदनेनोदरम्भराणामत एव तुन्दिलानां बौद्धभिक्षूणां कर्मपराङ्मुखतैव भर्त्सिता महाकविमुखाल्लेखकेन। वस्तुतः स्वकपोलकल्पितामेतां कथां व्याजीकृत्य सौगतादिसिद्धान्तगतश्रेयःसाधकतत्त्वानां श्रौतमतप्रसूतत्वमेव प्रतितिष्ठापयिषुर्दृश्यते मनीषिमूर्धन्यो लेखकः, न पुनस्तत्सिद्धान्तान् न्यक्चिकीर्षति, येनाशङ्क्येताप्यश्रद्धा तत्र तत्रभवतः।

यद्यपि अनुसन्धानपत्रिकायामस्यां काव्यकथानाटकादि प्रायशो नानुमन्यामहे, तथाप्युत्तरबाणभट्टकथा ह्येषा विशिष्टशोधदृष्टिप्रसूतेति स्वयमेवावगंस्यते समीक्षकैः।

ततस्त्रयाणां विश्वविद्यालयस्यास्य व्याकरणविभागे उपाचार्याणां **डॉ. गिरिजेशकुमारदीक्षित - डॉ. श्रीकान्तपाण्डेय - डॉ. रामचन्द्रद्विवेदि**महाभागानां व्याकरणशास्त्रसम्बन्धिनो विशिष्टास्त्रयो निबन्धाः क्रमशः **'क्ङिति चेति सूत्रार्थविचारः'**, **'पातञ्जलमहाभाष्ये पर्यावरणविज्ञानम्'**, **'पाणिन्युपज्ञं**

# सम्पादकीयम्

अथेदं प्रकाशमानीयमानं सारस्वत्याः सुषमायाः सप्तपञ्चाशवर्षस्यादिमाङ्क-युगलं विदुषां समीक्षकाणां करकमलेषूपायनीकुर्वन् अमन्दमानन्दमनुभवामि। सारस्वती सुषमा हि स्थापनायाप्रभृत्येव विश्वविद्यालयस्य, एतद्विश्वविद्यालयीयानामन्येषाञ्च विदुषां महत्त्वपूर्णैः शोधालेखैर्बहूपयोगिभिः संस्कृतवाङ्मयमहोदधे रत्नभूतै-र्विशेषतो विश्वविद्यालयीयसरस्वतीभवनस्थपाण्डुलिपिमाश्रित्य सम्पादितै-र्लघुग्रन्थैश्च समध्युषिता विश्वविद्यालयस्यास्य सारस्वतीं सुषमां वर्धयन्ती विराजत इति नास्ति तिरोहितं कस्यापि। इदमस्या अङ्कयुगलं दशशोधनिबन्धैर्लघुग्रन्थरत्नेन चैकेनालङ्कृतं शोभते। तत्र प्रथमतो विश्वविद्यालंयस्यास्य कुलपतिवर्याणां कविमूर्धन्यानाम् **आचार्यश्रीराजेन्द्रमिश्र**महाभागानां कृतिः **'उत्तरबाणभट्टकथा'** इति समलङ्करोत्येनाम्। महाकवेर्बाणभट्टस्य कान्यकुब्जपरित्यागं निमित्तीकृत्य तद्बीजत्वेन महाराजश्रीहर्षस्य सौगतमते श्रद्धातिशय एव प्रतिपादितो मनीषिणा लेखकेन, तत्प्रसङ्ग एवान्यदत्तोदनेनोदरम्भराणामत एव तुन्दिलानां बौद्धभिक्षूणां कर्मपराङ्मुखतैव भर्त्सिता महाकविमुखाल्लेखकेन। वस्तुतः स्वकपोलकल्पितामेतां कथां व्याजीकृत्य सौगतादिसिद्धान्तगतश्रेयःसाधकतत्त्वानां श्रौतमतप्रसूतत्वमेव प्रतितिष्ठापयिषुर्दृश्यते मनीषिमूर्धन्यो लेखकः, न पुनस्तत्सिद्धान्तान् न्यक्चिकीर्षति, येनाशङ्क्येताप्यश्रद्धा तत्र तत्रभवतः।

यद्यपि अनुसन्धानपत्रिकायामस्यां काव्यकथानाटकादि प्रायशो नानुमन्यामहे, तथाप्युत्तरबाणभट्टकथा ह्येषा विशिष्टशोधदृष्टिप्रसूतेति स्वयमेवावगंस्यते समीक्षकैः।

ततस्त्रयाणां विश्वविद्यालयस्यास्य व्याकरणविभागे उपाचार्याणां **डॉ. गिरिजेशकुमारदीक्षित - डॉ. श्रीकान्तपाण्डेय - डॉ. रामचन्द्रद्विवेदि**महाभागानां व्याकरणशास्त्रसम्बन्धिनो विशिष्टास्त्रयो निबन्धाः क्रमशः **'क्ङिति चेति सूत्रार्थविचारः'**, **'पातञ्जलमहाभाष्ये पर्यावरणविज्ञानम्'**, **'पाणिन्युपज्ञं**

**कारकार्थविश्लेषणम्'** चेति प्राकाश्यमानीताः। व्याकरणशास्त्रं न केवलं शब्दस्य साधुत्वासाधुत्वयोर्निकषायतेऽपि तु वैज्ञानिकानपि विषयान् परामृशतीति साधु प्रतिपादितं डॉ. श्रीकान्तपाण्डेयमहाभागैः स्वीये 'पातञ्जलमहाभाष्ये पर्यावरण-विज्ञानम्' इति निबन्धे।

वैयाकरणनिबन्धानामेव क्रमे **डॉ. वृजकिशोरत्रिपाठिमहाभागानां बाधबीजानुशीलनमपि** वैशिष्ट्यमावहति। शास्त्रयोर्द्वयोः परस्परविरोधे एकेनापरस्य बाधे नैकविधानि मुख्यतया चतुर्विधानि बीजानि शास्त्रेषु प्राप्यन्ते, तान्येव सोदाहरणं सविमर्शञ्च विवेचितानि विदुषा लेखकेनात्र।

नैकविधैः प्रमाणैर्ज्योतिषसिद्धान्तेष्वन्यतमस्य रोमकसिद्धान्तस्यास्तित्वं महत्त्वञ्च परिशीलयतां **डॉ. नागेन्द्रपाण्डेय**महाभागानां निबन्धोऽपि विशिष्टं स्थानमातिष्ठति। अत्र हि विषयगतं किञ्चिद्विवेचनं न कृतं नापि चिकीर्षितं विदुषा, यतो मन्ये तत्सिद्धान्तविशेषविषये ये हि सन्देहा आक्षेपा वा उपस्थाप्यन्ते, तेषामेव यथासम्भवं निराकरणे तदीयास्तित्वस्य च सप्रमाणं व्यवस्थापन एव लेखकोऽस्मिन् निबन्धे स्वव्यापारस्येतिकर्तव्यतां मन्यते। सर्वथा श्लाघ्यः प्रयासोऽयम्।

अयमत्रास्माकमनुरोधमङ्गीकृत्य विद्वद्भिः **डॉ. कमलाकान्तत्रिपाठि**महाभागैः **'वेदान्तमीमांसाशास्त्रारम्भणं युक्तम्'** इति शीर्षकाङ्कितो निबन्धो विशेषतो विदुषां ध्यानमावर्जयति। स चायं विमर्शः पूर्वं प्रकाशितस्य लेखविशेषस्य। अत्रापि विमर्शार्थं म्मीक्षका निवेद्यन्ते।

**डॉ.धर्मेन्द्रकुमारसिंहदेव**महाभागै**र्भारतीयदर्शनेषु पुनर्जन्मसिद्धान्त**विवेचनपरैः अत्यन्तं शोधपूर्णः प्रबन्धः संरचितोऽत्रास्माभिः प्राकाश्यमानीतः सुधियां गवेषकाणां नितान्तमुपयोगार्हो भविष्यतीति मन्यामहे। एवमेव **डॉ. जनार्दनप्रसादपाण्डेय**-महाभागानां **संस्कृतसाहित्ये सैन्यविज्ञानमिति** निबन्धोऽप्यनुसन्धित्सून् महदुपकरिष्यतीति द्रढीयान् नः प्रत्ययः। महाकविकालिदासकृतमेघदूतकाव्य-सरणिमनुसृत्य तदुत्तरवर्तिभिः सूरिभिरप्यनेकानि तथाभूतानि दूतकाव्यानि रचितानि। तामेव दूतकाव्यपरम्परामाधृत्य **डॉ. कमलेशझा**महाभागै रचितो निबन्धोऽपि विशेषतः प्रशंसामर्हति।

अन्ते **लघुग्रन्थमालायां डॉ.हरेरामत्रिपाठि**महाभागैः सम्पादितः **श्रीरघुनाथ-भट्टाचार्यविरचितः 'ईश्वरवादः'** इत्याख्यो लघुग्रन्थः प्रकाश्यते। विदुषा सम्पादकेन न केवलमस्य ग्रन्थस्य रचयितुर्वा वैशिष्ट्यं समुद्भावितम्, अपि तु ग्रन्थान्तरेण विशेषतो महादेवविरचितदिनकर्या सह तौल्यमपि प्रतिपाद्य समीक्षितं स्थलविशेषेषु।

इत्थमेभी रत्नैः सङ्ग्रथितेयं सारस्वती माला विदुषां पुरस्ताद् उपायनीकृता समेषाम्मुदमुद्वहत्विति परमेश्वरः प्रार्थ्यत इति।

**वाराणस्याम्,**
गुरुपूर्णिमायाम्,
२०६१ तमे वैक्रमाब्दे

**राजारामशुक्लः**
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# विषयानुक्रमणी

१. **उत्तरबाणभट्टकथा**
मिश्रोऽभिराजराजेन्द्रः १-१६

२. **क्क्ङिति चेति सूत्रार्थविचारः**
डॉ॰ गिरिजेशकुमारदीक्षितः १७-२४

३. **पातञ्जलमहाभाष्ये पर्यावरणविज्ञानम्**
डॉ. श्रीकान्तपाण्डेयः २५-३२

४. **पाणिन्युपज्ञं कारकार्थविश्लेषणम्**
डॉ. रामचन्द्रद्विवेदी ३३-३८

५. **बाधबीजानुशीलनम्**
डॉ॰ वृजकिशोरत्रिपाठी ३९-५२

६. **रोमकसिद्धान्तानुशीलनम्**
डॉ॰ नागेन्द्रपाण्डेयः ५३-५६

७. **वेदान्तमीमांसाशास्त्रारम्भणं युक्तम् [ विमर्शः ]**
डॉ॰ कमलाकान्तत्रिपाठी ५७-७०

८. **भारतीयदर्शनेषु पुनर्जन्मसिद्धान्तः**
डॉ॰ धर्मेन्द्रकुमारसिंहदेवः ७१-९८

९. **संस्कृतवाङ्मये सैन्यविज्ञानम्**
डॉ॰ जनार्दनप्रसादपाण्डेयः ९९-१०८

१०. **दूतकाव्यविमर्शः**
डॉ॰ कमलेशझाः १०९-११४

*लघु-ग्रन्थमाला*

१. **ईश्वरवादः**
श्रीहरेरामत्रिपाठी १-२६

●

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ५७ वर्षे | ज्येष्ठ-भाद्रपद-पूर्णिमे, वि.सं. २०५९ | १-२ अङ्कौ |
|---|---|---|

# उत्तरबाणभट्टकथा

**मिश्रोऽभिराजराजेन्द्रः**

कुलपतिः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयः

वाराणसी (उ.प्र.)

***

प्रीतिकूटमासाद्य चित्तं मे वासन्तकाननमिवाऽऽमोदभारभङ्गुरं जातम्। धावद्भुजङ्गविलसितोपमा ग्रामटिकासरणिर्न क्वचिदवसिता पर्यलक्ष्यत। पलालनिर्मितवर्तुललघुकुटीरे विश्रामन्त्यः पामरयुवतयो मां नगराभिजनं विलोकयन्त्यः कूणिताक्षिवलनैर्विस्मयमिव प्रकटयन्त्यः कञ्चुलिकानिर्गत-बाहुप्रचारैर्मदविषयिणीं कथङ्कथिकतामिव नाट्यन्त्यो मुहूर्तमिव चित्रलिखितास्तस्थुः। नग्नार्भकाणां सम्याभिनयपराणां कुमाराणामातिथ्यपद्धतिपरिचितानां यूनाञ्च कश्चित् सम्भिन्नसमुदायः, मह्यं प्राघुणोचितसम्भावनां प्रयच्छन् मामनुगच्छन्नासीद् ग्रामप्रवेशक्षणादेव।

शनैश्शनैरुपदिष्टमार्गोऽहं, समतिक्रम्य घोषान्, सनासारन्ध्ररोधं समुल्लङ्घ्य शौण्डिकापणान्—अगुरुगुग्गुलघृतशर्करादिहविष्यजातसमुत्थगन्धमेदुरा मृडानी-मन्दिरपर्यन्तभूमिं यावदागतवान्। मन्दिरस्य वामभाग एवासीन् महाकवेर्बाणभट्टस्य प्रासादकल्पं भूतिनिचितं गृहम्। दूरत एव समवलोक्य गृहप्रदेशद्वारं स्मृतिपथमधिरूढं कादम्बरीभूमिकापद्यमिदम्—

जगुर्गृहेऽभ्यस्तसमस्तवाङ्मयैः ससारिकैः पञ्जरवर्तिभिः शुकैः।
निगृह्यमाणा वटवः पदे पदे यजूंषि सामानि च यस्य शङ्किताः॥

रत्नशलाकाखचितविलम्बिपञ्जरेषु सत्यमेव प्रवेशद्वारमभितो विविधवाचिकाङ्क्षिकाभिनयवन्तः शुकाः सारिकाश्च विराजन्ते स्म। तच्चञ्चूपुटाग्रविलूननिपतितफलशाकादिशकलानश्नन्त्यो गृहवर्तिकाः कलघण्ट्यश्च मधुरकलरवैः परिवेशं मुखरयन्ति स्म। हम्भारवं विदधती कृष्णा धेनुरपि नातिदूरे शङ्कुबद्धाऽतिष्ठत्; परन्त्वेतत्सर्वं गृहवैभवमक्षिलक्ष्यीकुर्वदपि मम नयनयुगलं यदन्वेषणे कातरमासीत् स आसीत् कादम्बरीकथाकारो महाकविर्बाणभट्टः।

ततोऽकस्मादेव दीप्ततारुण्यसमृद्धं कमपि चन्द्रमुखमवलोक्याऽनुमितिगर्वोद्धुरस्सन्नहं निर्विशङ्कमपृच्छम्—आयुष्मन्! त्वमेवासि भूषणभट्टः? कादम्बरीकथाकारस्य महाकवेर्वंशदीपस्त्वमेवासि किम्?

—अथ किम्! तरुणोऽवदत्। कुतस्त्यो भवान्? कथञ्च मां प्रत्यभिजानाति? मयाऽदृष्टपूर्वो भवान्?

—वत्स! मत्परिचयं पश्चाच्छ्रोष्यसि। भवत्तातपाददिदृक्षुं मां सर्वप्रथमं तदन्तिकमेवोपनय। अहमवदम्।

—एष नयाम्यचिरादेव। तातपादस्तु भगवन्तं पशुपतिं मृडानीं च समर्च्य सम्प्रत्येव देवगृहादुपावृत्तो नेदीयसि गृहोद्याने पर्यटति। मामनुसरतु भवान्! भूषणभट्टोऽवदत्।

द्वित्रैरेव निमेषैर्गृहवाटिकामासाद्य महाकवीश्वरं तं विश्रुतयशसमपश्यम्। हिमावदातसितभूतिभासितभालपट्टः सितोत्तरीयसंवृतपूर्वकायो धीरप्रशान्तसंहननसम्पदतिशयो महाकविर्बाणभट्टो दूरत एव सन्दृश्य मां प्रत्यभिज्ञातवान् द्रुतपदैश्च पुरस्सृत्य मां सप्रणयं भुजपञ्जर आश्लिष्टवान्। क्षणं यावन्मूर्तीभूतावावाम्। नाऽसौ प्रगाढालिङ्गनदार्ढ्यं शिथिलीकर्तुमैच्छन्नाहं चाप्यात्मानं विमोचयितुं प्रयतितवान्। ब्रह्मानन्दसदोहरं रसमिवास्वादयन्तावावां मिथः सम्पृक्तावतिष्ठाव। अपृष्टा एवावयोः प्रश्नाः सर्वे समाहिताः। नाऽवशिष्टा काऽप्युत्कण्ठा पिपृच्छिषा वा।

ततश्चासौ महाकविरात्मारामप्रकृतिः स्वयं तृप्तस्सन् मां सवात्सल्यं गाढोपगाढात्पृथक्कृत्य पार्श्वस्थकाष्ठचतुष्किकायामुपवेश्य प्रोवाच—भद्र! कथं नु खलु कान्यकुब्जाद् विरतिः? भवन्तमिह दृष्ट्वाऽहं साऽऽशङ्कं विस्मितोऽस्मि। तदचिरेण सान्त्वय मम कौतूहलम्।

वागारम्भात्प्रागेव नयने मे नीहारकणसन्ततिनिचितप्रभातकुवलयपत्रतामुपमयतु। तथाऽप्यन्तर्व्यथां वाचंयमत्वदक्षां कथमपि नियम्य साभ्यर्थनं

निवेदितवान्—वन्द्यचरण! तत्सर्वं पश्चादहं कथयिष्याम्येव; परन्तु सर्वप्रथमं कान्यकुब्जवास्तव्यानां भवद्वशंवदानां पक्षतोऽहमेव ज्ञातुमिच्छामि किञ्चित्। अनाख्याय कस्मैचित्, अनिवेद्य किञ्चिद् अनवगमय्य कमपि यथा भवद्भिः परित्यक्तं कान्यकुब्जं, तेन निखिलमेव नगरं विविधनतोन्नतवृत्तपर्याकुलं परिलक्ष्यते। तीर्थयात्रां प्रस्थितो भवानित्येके। धर्मचर्चासंसदि भर्त्सितो वेदनिन्दको हर्षदेवो भवतेत्यपरे। जन्मभूमिदर्शनकातरतया प्रीतिकूटं गत इत्यन्ये। यावन्मुखाद्भवतो न किञ्चिच्छृणोमि न तावन्ममापि विचिकित्सानिवृत्तिः। भवद्भृत्यप्रामाण्यात् प्रीतिकूटा-गमनव्यतिकरं निशम्यैव समागतोऽस्मि।

मत्प्रश्नौघशाकुनिकैः परिगतस्सन् महाकविर्निरातङ्कोऽरण्यस्तम्बेरम इव क्षणं यावत्स्तम्भं नाटयन् प्रोवाच—भद्र! कान्यकुब्जस्थैर्मदन्तरङ्गप्रियजनैर्यन्मध्ये विकल्पितं त्रयाणां तदेव सत्यम्। धर्मचर्चासंसद्येव कान्यकुब्जेश्वरो हर्षो मयाऽधिक्षिप्तः। परधर्माऽसहिष्णुरसौ सगुणोपासनां देवविग्रहनमस्यां शास्त्रविहित-कर्मकाण्डञ्च नृपत्वाभिमानजनितनिर्भयत्वगर्वितस्सन् खलीकुर्वन् परिलक्षितो मया। सर्वेऽपि त्रयीश्रद्धालवस्सभास्तारश्चित्रतुरगीभूतास्तितिक्षामनुमोदनञ्च नाटयन्त-स्तूष्णीमुपगताः; परन्तु हर्षदेवस्य विपन्नां वाचोयुक्तिं निपीयैव स्मृतप्रथमपरिचय-क्षणावमानस्य मे यकृत्प्रजज्वाल।

मध्येव्याख्यानमेव तं साटोपं संस्थगय्य निर्भयोऽहमकथयम्—राजन्! अलमनर्गलप्रलापेन! नाऽहं तव करदसामन्तः। नाऽहं त्वदनुग्रहोपस्कृतजीवितः। न चाऽप्यहं भवत्सारस्वतवैदग्ध्याऽधमर्णः। प्रथमपरिचयाऽवसरेऽपि 'महानयं भुजङ्ग' इति दुर्मर्षणीयवचनोपक्रमैर्भवताऽधरीकृतोऽस्मि। तन्मया सोढम्। मिथ्याप्रचारितं मद्विषयकं कौलीनं भवता सहस्रकर्णतया निपीतं बहुजनसंविभक्तञ्च। तदपि मया सोढम्। अस्मान् वेदमतनिष्ठान् विजानताऽपि भवता यथाकथञ्चित्सन्दर्भमुत्पाद्य वयमुपहसिताश्चेष्टेङ्गिताकारादिभिः। तदपि मया सोढम्।

परन्तु कान्यकुब्जेश्वर! न सहिष्ये सम्प्रति सर्वेश्वरावमानम्। न सहिष्ये त्वत्कृतां वेदनिन्दाम्। न सहिष्ये त्वदुत्थापितं नित्यं नैमित्तिकञ्च ब्राह्मण-धर्मविद्वेषम्। स एव ब्राह्मणधर्मोऽयं यस्य शाखामात्रमस्ति तव सौगतमतम्। स एव ब्राह्मणधर्मोऽयं यमपूपुजत्तातपादस्ते तातपादः प्रभाकरवर्धनः। स एव ब्राह्मणधर्मोऽयं यस्मिन्नात्मश्रद्धां निष्ठां च प्रकाशयितुकामेन तेन भूतभावनो भगवान् स्थाण्वीश्वरोऽत्र प्रतिष्ठापितः। पृच्छ राजन्! दिवङ्गतं महामाहेश्वरं स्वतातपादं यत्किमर्थमसावाजीवनं सम्यगानर्च स्थाण्वीश्वरं शम्भुम्? किमर्थमश्रौषीत्प्रतिसन्ध्यं

वेदत्रयीम्? किमर्थं ललाटपट्टे न्यस्तवान् ब्राह्मणचरणपङ्कजरेणुनिकरम्? किमर्थं वा पालयाञ्चकारं श्रुतिस्मृतिपरिरक्षितां सनातनधर्मदेशनाम्?

गर्वितोऽसि राजन्! तेन तथागतेन यो गृहदायित्वमपि सम्पादयितुं न शशाक। तत्याज कान्दिशीक इव प्रसुप्तं दुग्धमुखं दारकम्। नाऽपश्यत् यौवनभारभङ्गुरां स्मरनाट्यमञ्चभूतां भार्यां यशोधराम्? न चाऽप्यालुलोके सकृदपि तनयवियोगकातरमशक्तं वृद्धजनकं शुद्धोदनम्। क्लीब इवोद्विज्य संसारात् प्राद्रवत् यस्संसाररक्षार्थम्।

राजन्! एष भवन्तमेव परमार्थतः पृच्छामि। किं कानने निलीयैव संसारो रक्षितुं शक्यते, नोषित्वा गृहे? हन्त, कियदुपहासास्पदमिदं तथ्यम्। यस्य संसारस्य रक्षा काम्यते, तत एव पलायनं क्रियते? संसारं परित्यज्य संसारस्य रक्षा? समरं विहाय समरविजयः? समित्वं विहाय दायित्वपूर्तिः?

तत्संसारं विहायापि किमवाप्तं तव सिद्धार्थेन? किमवाप्तं राजन्! यदिदानीं यावदनवाप्तमासीत्। आर्यसत्यानि चत्वारि? चत्वारि आर्यसत्यानि प्रागपि को न ज्ञातवान् भारते? आपामरेभ्यो विपश्चिन्मण्डलं यावत्को न परिचिनोति संसृतिसत्यचतुष्टयमेतत्। किमेतानि पूर्वं नोपदिष्टानि वेदेषु पुराणेषु काव्येषु वा? तापत्रयनिवारणं किं न प्रतिज्ञायते सांख्यदर्शनेन? अज्ञाननिवृत्तिः किं नोपदिश्यतेऽद्वैतवेदान्तदर्शनेन? दुःखमुक्त्युपायाः किं नोपवर्णितास्तपस्विभिः प्राक्तनैः? तत्किमभिनवं प्रोक्तं सिद्धार्थेन? किमिदम्प्रथमतयाऽन्विष्टं सिद्धार्थेन? राजन्! क्व तिष्ठति सिद्धार्थता तव सिद्धार्थस्य? एष बाणभट्टोऽहं मध्येसभमुद्घोषयामि यन्नासौ कथमपि सुगतः परिलक्ष्यते। वस्तुतो लोकपरलोकोभयदृष्ट्या दुर्गत एवासौ।

कान्यकुब्जेश्वर! शृणु सम्प्रति स्वसिद्धार्थस्य लोकोपकारपद्धतिम्। युवानोऽपि पञ्चविंशतिवर्षदेशीयाः कर्तव्यपथं विहाय श्रमणाः स्युर्निर्वाणधिया। किमयमेवोपकारस्सुगतस्य? नगरस्थघण्टापथेष्वशीतिसहस्रमिताः परोपजीविनो मुण्डितशिरस्का भिक्षवो नित्यं पर्यटेयुः। किमयमेव लोकोपकारस्तव सुगतस्य? क्षणं यावच्चिन्तय राजन्, कस्तेभ्यो लम्बोदरेभ्यो भुवि भारभूतेभ्यो भिक्षां दास्यति? किमर्थं वा दास्यति? न ते कृषकाः। न लौहकाराः। न स्वर्णकाराः। न धानुष्काः। न कुम्भकाराः। न याष्टिकाः। न शिल्पिनः। न कारवः। न व्यवसायिनः। न कलाजीविनः। न शैलूषा जाङ्गलिका मार्कटिका ऐन्द्रजालिका वा। सर्वथा निष्क्रिया एते सर्वे। काममात्मानमुपकुर्वन्तु भवदुपायनीकृतगार्हस्थ्यातिशयितसुख-

साधनोपायैः; परन्तु लोकं नैते क्षपणकाः कथमप्युपकुर्वन्ति। तदेवं, कस्तान् मयूरव्यंसकान् भोजयिष्यति?

हन्त! वृद्धाः स्वेदाञ्चितवपुषोऽहोरात्रं सश्रमं कृषिकर्म सम्पादयन्तु। निर्वाणकामाः पुनरेते चत्वरवृषभा अकृत्वैव किञ्चित् सायं प्रातरुदरम्भरि भक्षयन्तु घृतापूपमिश्रितपक्वान्नम्। राजन्! कुतस्त्योऽयं न्यायः? अहो, यस्मिन् कर्मयोगपक्षधरे राष्ट्रे समुद्घोषयन्त्युपनिषदः कुर्वन्नेवेह कर्माणि जिजीविषेच्छत समा इति। योगेश्वरो भगवान्मधुसूदनोऽपि नियतं कुरु कर्म त्वमित्यादि यत्र समुपदिशति, तस्मिन्नेव भारतराष्ट्रे कर्मणोऽयमधरीभावः? पौरुषस्येदृशी गर्हणा? निष्क्रियताया एतादृगभिनन्दनम्?

राजन्! हर्षदेव! धिक् तं धर्मं, धिग्धिक् तं सम्प्रदायं यस्समाजं क्लीबं विदधाति, यो लोकं कर्मपराङ्मुखं कुरुते, यो लोकं पराश्रयितं परोपजीविनं परमुखापेक्षिणञ्च विधत्ते। राजन्! निर्वाणं न तिष्ठति दायित्वनिवृत्तौ। निर्वाणं विलसति दायित्वसम्पादने यदर्थं पञ्चयज्ञाः समुपदिष्टाः। कर्ममयीयं सृष्टिः। देवा अपि नितरां कर्मरताः। सूर्यस्तपति प्रतिक्षणं, चन्द्र आह्लादयति प्रतिक्षपम्। अग्निर्ज्वलत्यहोराष्ट्रम्। प्रवहति वातस्सततमेव। सर्वात्मा त्रिगुणात्मा सर्वदेवमयो हरिरपि न तिष्ठत्यकर्मकृत् क्षणमपि। इदमेव सृष्टिरहस्यम्। इदमेव यज्ञरहस्यम्। राजन्। इदमेव वेदरहस्यं यदजानन्निव विद्वेक्षि।

परन्तप! किं तव गौतमस्य काऽप्यन्या सृष्टिर्यत्रेतरे सृष्टिनियमाः प्रवर्तन्ते? किं तव सिद्धार्थस्य कश्चिदन्यस्संसारो यत्र सर्वेऽपि श्रमणा एव निवसन्ति, न श्रमणेतराः? सर्वेऽपि यत्र परिव्राजका एव, न गृहस्थाः?

त्वन्निर्मितेषु वियच्चुम्बिविहारभवनेषु बहुभूमिकेषु सर्वसुखानन्दनिचितेषु स्वैरं विहरन्ति मुण्डितशिरस्का एते मल्लास्त्वदधीनयोगक्षेमाः। अद्य पृच्छति बाणभट्टोऽयं प्रजाप्रतिनिधिर्भवन्तं यत्कस्यान्नं त्वमेतान् भोजयसि? कस्य वस्त्राणि त्वमेतान् परिधापयसि। केषां श्रमोपार्जितसौख्यभरैस्त्वमेतानकारणं सुखयसि? एतत्सर्वं न तवापि वैयक्तिकशेवधिः, राजन्! सर्वमिदं लोकस्य, समाजस्य, जनताया वा। भवानपि लोकप्रतिनिधित्वेनैव प्रजासंरक्षकत्वेनैव समृद्धिमिमां भुनक्ति।

राजन्! विद्वेक्षि तं शाश्वतं सनातनं वेदधर्मं यो विनिर्ममे विश्ववारां संस्कृतिम्। विद्वेक्षि तं जगदीश्वरं यः प्रजानां जन्मनि रजोजुट् परिपालने सत्त्ववृत्तिः

प्रलये च तमःस्पृक् परिलक्ष्यते। विद्वेक्षि तं परमेश्वरं यतोऽयं निसर्गः, यस्मिन्नयं निसर्गः, यदवध्ययं निसर्गः?

सामान्यमनुष्यमेकमैश्वर्यविरहितं शौद्धोदनिमीश्वरपदेन प्ररूढप्रयत्नैः प्रख्यापयन् न लज्जसे राजन्? सर्वतन्त्रस्वतन्त्रञ्चेश्वरं कुतर्कैः प्रत्याख्यातुमुपक्रमसे? परं साहसिकोऽसि कान्यकुब्जेश्वर! प्रशस्ता ते सद्धर्माऽसहिष्णुता। बन्धनशृङ्खलेव कटु क्वणन् निरन्तरं तुदसि राजन्! परन्त्वसह्यं ते वचो महाहेर्दुर्विषमिव। धावकादीन् परितोष्योत्कोचैः कामं कामं नाट्यकारोऽसि जातः; परन्तु जानाम्यहं परमार्थम्। न भवान्निपुणः कविर्न परिषदप्येषा त्वद्गुणग्राहिणी। खड्गभीतैषा परिषद् विहाय मामेकम्। वात्स्यायनोऽहम्। अस्मत्पूर्वजैः संरक्षकत्वेनाङ्गीकृता मौखरिणो न भवादृशा ऋतवर्त्मविरोधिनः।

नेदं लक्षणं सत्कवेः। सत्कविर्भवत्येव हैयङ्गवीनमसृणतरलहृदयः। सत्कविर्भवत्येव गगनाभोगविस्तृतहृदयः। नाऽसौ विद्वेष्टि, तुदति, ईर्ष्यत्यसूयति, प्रतिस्पर्धते वा। राजन्! यदि कविहृदयमेव नोऽवाप्तं तर्हि व्यर्थमेवात्मप्रचारितं ते कवियशः। जीवति बाणभट्टे मयि क्व ते कविराजिराजनिपुणता? जीवन्नपि न जीवसि कान्यकुब्जेश्वर! धर्मान्तरविद्वेषभावनया। प्राकृतपदवीमुपगतोऽसि परगुणोत्कर्षाऽसहिष्णुतया। महाजनपरिच्युतोऽसि नूनमात्मसुभगम्मन्यतया। न भवानर्हति नलरामयुधिष्ठिरोचितं चरितानुशंसनम्। तदेष वात्स्यायनो बाणभट्टस्सशपथं सङ्कल्पते यत्र तेऽर्धोट्टङ्कितं चरितं पूर्तिमेष्यति। प्रजापते! त्वदुपायनीकृतोऽयं रत्नजटितोष्णीषो राजकविप्रतीकभूतस्तवैवाधिकारे तिष्ठतु। एष गच्छामि। प्रीत्याह्वयतेतरां मां मम वंशाग्रहारः प्रीतिकूटो नाम।

इत्युक्त्वैव प्रणम्य सर्वान् द्राक्परावृत्त्यास्थानमण्डपाद् बहिर्निष्क्रान्तोऽहम्। सर्वेऽपि नृपलालाटिका बौद्धा हतप्रभा इवातस्थिरे। यावन्ममोद्गारं न कोऽपि किञ्चिदपि बभाषे। भगवतः कपर्दिन आवेश इव मयि सञ्जातस्तस्मिन्नवसरे। अत एव राजसभासमुदाचारोऽपि विस्मृतो मया। निर्व्यूढकरकापात इवाऽकालजलदः सर्वमभिप्रेतं प्रकटय्य तस्मिन्नेव प्रदोषे परित्यक्ता मया राजधानी। यद्यहं तत्रावत्स्यं निश्चप्रचं कान्यकुब्जेश्वरो मामनुनेतुममात्यान् प्रेषयिष्यत। तत्सर्वं पश्चाद्भावि व्यतिकरान्तरमनभिलषतैव मयैवमनुष्ठितम्। अत्र स्वकीये पितृपितामहादि-सुचरितमण्डिते जन्मगृहे सुखं तिष्ठामि। विश्वसिहि भद्र! कान्यकुब्जमप्यतिशेते प्रीतिकूटोऽयम्। यतो ह्यत्रैव वर्तते कादम्बरीकथाया निमित्तोपादानभूमिः।

मेघवृष्टिपरिस्नात इव निदाघरजःप्रसरधूसरपादपो निर्मलोऽहं सञ्जातः। कान्यकुब्जवास्तव्यैरश्रुतचरोऽयमुदन्तो मयैव कर्णपथातिथीकृतः। वस्तुतस्सार्थवती जाता मम प्रीतिकूटयात्रा। अद्याऽनुभूतो मया कस्यचित् सारस्वतसाधकस्य वंशाभिमानः। प्रत्यक्षीकृतं खलु तस्य निरङ्कुशत्वम्। सबहुमानं सप्रमाणञ्चाङ्गीकृतं मया तस्याऽपरविरञ्चित्वम्। वशीकृतचेतन इवाऽहं झटित्येव महाकविचरणेन्दीवरयोर्निपत्य तद्धूलिकणिकाभिश्चात्मायतभालपट्टं पवित्रीकृत्य भावशाबल्यप्रह्वीभूत इवाकथयम्—

वन्द्यचरण! अद्भुतमाचरितवान् भवान्। अविश्वसनीयोऽयं प्रसङ्गः। तथाऽप्यहं प्रत्येमि भवत्प्रामाण्यात्। अहो! यद्भ्रूभङ्गबालवक्रतामात्रेण निशीथिनीजागरैः क्षपयन्ति कालं प्रतिवेशिभूपतयस्तस्याप्युत्तरापथचक्रवर्तिनः कान्यकुब्जेश्वरस्य भवत्समक्षमीदृशो न्यक्कारः? मन्ये, भवद्विग्रहेण दम्भोलिनैव गगनोच्छ्रायो महीधरो विदीर्णः। भवत्स्वाभिमानझञ्झानिलेनैवाऽम्बरप्रसारितशतशाखो न्यग्रोधो धराशायीकृतः। अगस्त्यप्रतिमेन भवद्गौरवेणैव विन्ध्यप्रतिमा हर्षदेवाऽहम्मन्यता वानीरतामानीता। नूनमद्य जितं कविगरिम्णा। प्रतिफलितं सारस्वतसाधनया। दण्डितं भवताऽदाक्षिण्यं हर्षदेवस्य। निपातोऽयं राज्ञः पक्षपातस्य।

तावता कालेनैव गृहसेविकाऽऽगत्य सूचितवती—स्वामिन्! भोजनं निर्वर्तयितुं प्राघुणेन सहैव भवन्तमामन्त्रयते पुत्रवधूः। तदलं विलम्बेन। एतदानीतं मया पाद्यजलम्।

तदाकर्ण्यैव महाकविर्मामवदत्—भद्र! एषा मे गृहसेविका सुनन्दा। मम पत्न्या सार्धमेव श्वसुरालयादिहागता। दिवङ्गतायाञ्चापि देव्यां कुटुम्बमिमं विहाय न क्वचिदन्यत्र गतवती भूषणं प्रति समधिकवत्सलतया। दौष्यन्तिरिव भूषणभट्टोऽपि शैशवेऽतिशयचपल आसीत्। तस्यानिरुद्धत्वं चापल्यञ्चाभिलक्ष्य सुनन्दैव तं पुलिन्दनाम्ना सम्बोधितवती। अधुनाऽपि ग्रामवासिनस्तं पुलिन्दनाम्नैव प्रत्यभिजानन्ति। मम पुत्रवधूः सुनन्दायामतितरां श्रद्दधते। न तां गृहसेविकादृष्ट्या जातु पश्यति। उभेऽपि मिथः प्रगाढां प्रीतिं निर्वहतः।

तत्प्रस्थातव्यमावाभ्यां मध्याह्नभोजनार्थम्। प्रीतिकूटमागतो भवान् कतिपयदिनानि यावन्मया सहैव तिष्ठति, न चेत्कार्यान्तरातिपातः। बहु द्रष्टव्यमत्र शोणोपकूलवर्तिनि सघनकान्तारे। तत्सर्वं शनैः शनैः पर्यायेण दर्शयिष्यामि। एहि, गृहाभ्यन्तरं प्रविशावः।

एवंवादिनं महाकविमनुसरतैव मया प्रोक्तम्—आर्य! नाहं सत्वरः कान्यकुब्जं प्रति। किञ्च, भवद्भिरिदानीमेव विज्ञापितोऽस्मि यदत्रैव प्रीतिकूटे विलसति कादम्बरीकथाया निमित्तोपादानभूमिः। निमित्तमुपादानञ्च सुष्ठु वेद्म्यहम्, तथापि सूत्रभूतमिदं वाक्यं मच्चेतसि जनयति दुर्वारां जिज्ञासाम्। तत्सर्वमविज्ञाय समवलोक्य वा नाहं शममुपैष्यामि।

मम वाच्यार्थस्य गूढसङ्केतं परिगृह्णन् महाकविर्बाणभट्टः सस्मितमभणत्—सम्यगुक्तं भवता। उभावेव सम्प्रत्यारण्यकौ सगन्धौ च। त्वरायां सम्भ्रमे समुद्वेगे वा पौरा जीवन्ति, न पुनर्ग्रामीणाः। भोजनं निर्वर्त्य मुहूर्तं यावद् विश्रम्य चाध्वखेदमतिवाह्य अधिसन्ध्यं पशुपतिसमर्चनार्थं देवालयं गमिष्यावः। श्वस्तने प्रभाते च भवन्तं पुराणशाल्मलीतरुमण्डितां विन्ध्याटवीं ततश्चाद्यापि भूतभावन-माशुतोषमाराधयन्तीं महाश्वेतां दर्शयिष्यामि।

भोजनं निर्वर्त्याऽतिथिशालायामधिशय्यं शयानेन मया परितोऽपि दृष्टिनिक्षेपः कृतः। औदीच्यभित्तिफलके नागदन्तावलम्बितमासीद् भगवत्या मल्लिकाक्षवाहिन्या दृष्टिबन्धक्षमं चित्रम्। ततश्चालेख्यं दक्षिणेन क्रमेण महाकविपूर्वज़ानां कुबेराऽच्युतहरेशानपशुपत्यर्थपतिचित्रभानुप्रभृतीनां चित्राणि वर्णादिप्रयोगदक्षचित्रकृद्घटितानि भित्तिन्यस्तान्यासन्। तत्सर्वं विस्फारितविलोचनाभ्यां निपिबन्निवाहं कश्चिदन्य एव संवृत्तः। निखिलोऽपि सारस्वतो वात्स्यायनवंशो महाकवेर्ममालोके प्रत्यक्षमिवाभासत। स्फुरिताधर इव, किञ्चिदामन्त्रयमाण इव, रहस्यमुपदिशन्निवाऽनामयकुशलप्रश्नं पृच्छन्निव प्रत्येकं वंशचित्राणां जनः पर्यलक्ष्यत। तत्सर्वमनाख्येयं विलक्षणञ्चानुभूय प्रगाढहर्षातिरेकसम्भारसञ्जातपुलकोऽहं क्षणमप्यक्षिणी निमीलितुं नाऽशकम्। उन्निद्र एव होरावधिककालमनयम्।

तावदेव भूषणभट्टस्समागत्य प्रोवाच—पितृव्यचरण! बिल्वपानकं भवत्स्नुषया निर्मितं सुनन्दया चानीतम्। बहिरलिन्दे स्थितस्तातपादो भवन्तं प्रतीक्षते सपीत्यै। तदुत्तिष्ठतु भवान्। मयाऽऽनीतेन जलेन हस्तमुखादिकं प्रक्षाल्य स्फूर्तिञ्चानुभूय पानकं गृह्णातु।

चिरञ्जीव वत्स! एष आगच्छामि। इत्येवमभिदधानोऽहं शय्यातस्समुत्थाय कक्षद्वारभूमिमागतवान्। तत्रैव च भूषणप्रदत्तेन मल्लकजलेनाऽर्धनिद्राभारभुग्नं नेत्रयुगलं मुखं हस्तौ च प्रक्षाल्य, लोमशप्रोञ्छन्या सर्वमप्यङ्गजातं श्यानं विधाय, सहैव भूषणेन, महाकविसन्निधिमागतवान्। एलालवङ्गमरिचादिमिश्रितं बिल्वपानकं

निपीय विचित्रैव कापि संस्फूर्तिर्मयाऽनुभूता। महाकविर्बाणो मध्येरसपानमेव मामवदत्—'अयं बिल्ववृक्षोऽस्मत्तातपादैर्गृहवाटिकायां मूलितः। अत एव एत्फलनिर्मितं रसं पिबन्नहं तद्वात्सल्यरसमप्यास्वदे'।

तदाकर्ण्य झटित्येव स्मृतमहाकविविपन्नशैशवस्य नवीकृततत्प्रतिबिम्ब-कल्पवैशम्पायनकरुणकथस्य मे नेत्रे सहसैवाऽश्रुसन्ततिनिचिते सञ्जाते। वैशम्पायनस्येव कादम्बरीकारस्यापि मातृसौख्यं नाऽऽसीत्। शुकशावक इव सोऽपि वार्धक्यविकलेन तातपादेन तैस्तैरुपायैः संवर्धित आसीत्। महाकवेर्वाक्यं निशम्यासीन्मच्चेतसि—हन्त! अननुभूतजननीपरिचर्यासुखो जनः पितृवात्सल्यं यदि पदे पदेऽनुभवति, किमत्र चित्रम्? अयं बिल्ववृक्षोऽपि पितृवासल्यविग्रहभूत एव महाकवेः कृते। अहमपि धन्यस्सञ्जातस्तत्फलपानकं निपीय।

मन्मानसी स्थितिर्महाकविनाऽपि तर्कितेत्यहं मन्ये। तत एव प्रसङ्गान्तरव्याजेन मामन्यविधीकर्तुं सस्नेहमवददसौ—भद्र! स्मर्यते न वा? इदानीमेव प्रस्थातव्यमस्माभिरर्धनारीश्वरसान्ध्यनीराजनविधिसम्पादनार्थम्। भूषणा-दयस्सर्वेऽपि नित्यगामिनः। अद्यापि सहचरिष्यन्त्येव।

अर्धहोरानन्तरमेव प्रस्थिता वयम्। देवालयो नातिदूरे स्थित आसीत्। दूरादेवाऽभ्रंल्लिहाग्रशिखरोऽसौ मयाऽवेक्षितस्सप्रणामम्। सान्ध्यनीराजनवेलामिवो-त्प्रेक्ष्य गगनमपि नक्षत्रनिचयावदातमल्लिकाकुसुमप्रकरकरम्बितमिव सञ्जातम्। त्रियामागमनशङ्कोपचितकलरवाः पत्ररथाः शिवताण्डवस्तोत्रमिव गातुमारेभिरे। प्रदोषदोहाशयाऽसकृत्प्रकटितहम्भारवा धेनुश्शङ्खनादमिव मध्ये-मध्ये समाचरत्। आदिवसं वनेष्वाहिण्डमाना भक्ष्यपूरितोदराश्छाग्यः कण्ठनिबद्धच्छुद्रघण्टिकानादै-र्गृहोपावर्तनवृत्तं सूचयन्त्यो नीराजनविधावपि घण्टानादमिवातेनिरे। एवं हि, प्रकृतिरपि पशुपतिपूजनमनस्का समजायत।

देवालयोऽयं मौखरिभूपतिभिर्निर्मापित आसीत्। अत्रैव यावज्जीवनं निवसन् त्रिपुरध्वंसिनं भगवन्तं विरूपाक्षं सेवमानो वात्स्यायनवंशदीक्षागुरुर्वन्द्यचरणो भर्वुर्दुर्धर्षं तपस्तप्तवान्। महाकवेर्बाणभट्टस्यापि शैशवकालं यावदसौ धृततनुरलभ्यं लोकयशो बहुमानञ्च भेजे। मौखरिणो नृपतयोऽपि भर्वुपरिचर्ययाऽऽत्मानं सुभगम्मन्यीकृतवन्तः। सर्वमिदमितिहासवृत्तं महाकविमुखोद्गीर्णं मया तत्रैव श्रुतम्। नमामि भर्वोश्चरणाम्बुजद्वयमिति कादम्बरीभूमिकापद्यांशस्य रहस्यमपि सम्प्रत्येव स्फुटीभूतम्।

अधोऽधो देवालयं प्रावहच्छोणनदो रेवावियोगजन्यघर्घरारावनिचितमन्युमिव समुद्गिरन्। क्वचिदुत्पतन्तीभिश्शफरकन्यकाभिर्घनागमस्तनयित्नुरिव विद्युल्लताभिरुन्मेषलीलां वितन्वन्, क्वचिज्जलमध्योद्गतद्वीपभूमिषु सूर्यातपसौख्यमाप्नुवद्भिर्मकरैर्मकरालयभ्रान्तिमिवोपजनयन्, क्वचिदवकीर्णशतसहस्रबृहल्लघुपाषाणशकलैर्दृषद्वतीसहोदरत्वमिव प्रकटयन्, क्वचिच्चानुतटरुहां वानीराणां कदम्बकैः कालिन्दीतटान्तविरूढनिकुञ्जानां विच्छित्तिमिव विरचयञ्छोणो मामतितरां प्रभावितवान्।

सान्ध्योऽन्धकारस्तावता कालेन खलदम्भ इव प्रगाढो जातः। भूषणभट्टस्तु पूजनानन्तरमेव सकुटुम्बं प्रस्थित आसीत्। आवामेव तास्ताः कथाः कुर्वाणौ शोणतटंवर्तिनि दृषत्स्थण्डिले स्थितावास्व। तावदेवासन्नप्रायोपरागजनितसाध्वसाडम्बरमन्दप्रभः कृष्णपक्षत्रयोदशतिथ्यतिथीभूत ईषद्वर्तुलमण्डलश्चन्द्रः पुरन्दरदिशायामुदियाय। निखिलाऽपि सान्द्रकान्तारराजिरन्तर्निविष्टचन्द्रिकाशकलैर्वानचित्रितपटच्छविमिवादधे। सुगमो जातः पन्थाः। महाकविना सार्धमेवाऽहं गृहमागत्य सायन्तनोचितसन्ध्यावन्दनादिकं निर्वर्त्य रात्रिभोजनं यथेष्टं गृहीतवान्। किञ्चित्कालं यावल्लोकवार्ताः श्रुत्वा श्रावयित्वा च महाकविना सप्रणयमभ्यनुज्ञातः पल्यङ्कतल्पमगच्छम्।

ततश्चापरेद्युः प्रातराशानन्तरं महाकविमपृच्छम्—आर्य! महाश्वेतां दर्शयितुं दत्तवचनो भवान्। तस्मिन् विषये महत्कौतूहलं मे। का सा? कुत्र निवसति? जीवति, स्मृतिशेषा वा? केन गुणेनासौ भवत्कथापात्रीभूयाऽमर्त्यताङ्गता? तत्सर्वमामूलाच्छ्रोतुं दोलायते मच्चित्तम्।

एहि, वाटिकायामेव सर्वं श्रावयिष्यामि। निर्मक्षिकं तत् स्थानमित्यभिदधानो महाकविर्मामादाय प्रस्थितवान्। उपविष्टावावाम्। ततश्चावस्थान्तरमिव गतो महाकविर्मामवदत्—

भद्र! नेयं काऽपि कल्पनाश्रिता कथा! जीवद्वृत्तमिदम्। महाश्वेताऽस्ति मम पितृष्वसुः कन्या। तस्या जन्मापि ममैवाऽस्मिन् गृहे समजायत। मम पितृष्वसा सुजाता इतो नातिदूरे ग्रामे परिणीता केनापि रूपगुणपाण्डित्यमण्डितेन महापुरुषेण। तयोः प्रथमसन्ततिरासीदियं कन्या। तस्या अतितरां शुक्लिमानं निर्वर्ण्यैव सञ्जातपुलकेन तातपादेन महाश्वेतेति तस्या अभिधानं कृतम्। साऽऽसीन्मत्तः पञ्चहायनैर्यवीयसी, तथापि नामाऽबोधविकलं शैशवमावयोः प्रायेण युगपदेव

व्यतीतम्। सा कदाचित् प्रीतिकूटे निवसति स्म, कदाचिदहमपि तद्ग्राममासाद्य कालं यापितवान्।

महाश्वेताया भवनं निकषैवासीत्पद्मसरः किमपि अछौधनाम। कादम्बर्यां मया तदेवोपवर्णितम् अच्छोदनाम्ना। अस्य सरोवरस्य जलेनैव सकलस्यापि ग्रामस्य गतिरासीत्। यतो हि देवालयसोपानमार्गाद्यलङ्कृते कस्मिंश्चिद् घट्टे ग्रामवासिनः स्नान्ति स्म, वनोपकण्ठलग्ने श्यानपङ्के कस्मिंश्चिद् घट्टे पशवो जलं पिबन्ति स्म, सन्तरणलीलाञ्चापि नाटयन्ति स्म, दूरवर्तिनि घट्टे कस्मिंश्चिद्रजका ग्रामवास्तव्यानां वस्त्राणि क्षालयन्ति स्म। समागतप्राय एव शरदृतौ पुष्करमिदं विकसित-कोकनदैर्मधुपानलम्पटैर्भ्रमरै रिरंसावर्धितप्रणयिनीप्रसादनोपायै राजहंसैर्मत्स्यभक्षण-लोलुपैः कारण्डवैः सचीत्कारं गगनमण्डलचङ्क्रमणलीलां नाटयद्भिष्टिट्टिभैश्च कामप्यपूर्वमिव सुषमां धारयति स्म। अहमप्यादिवसं तत्रैव महाश्वेतया सह कृत्रिमपुत्रिकाकूकूरुतादिक्रीडाः सम्पादयन् समयमनैषम्।

लावण्यशालभञ्जी आसीन्महाश्वेता। सम्पिण्डिताङ्गपारावतयुग्ममिव नयनयुगलं, कम्बूपमा ग्रीवा, चमूरुपोतक्या इव सलज्जा मन्दगतिः, परभृतिकाया इव मधुवचनोपन्यासः, पारिजातपुष्पमिव मन्दस्मितं, साक्षात्सरस्वत्या इव मनोहरिणबन्धनरज्जुकल्पं वीणावादनम्। भद्र! किमधिकेन? स्वर्गान्निपतिता देवाङ्गनैव काऽपि प्रतीयते स्म मम भगिनी। मत्तातपादास्तु तस्या वीणावादनमाकर्ण्य सर्वमपि विस्मरन्ति स्म। अस्मिन्नेव शिवायतनेऽनेकधा सा पर्वावसरेषु भगवन्तमाशुतोषं पराम्बाञ्च स्ववीणावादनेन प्रसादितवती।

यथावसरं विवाहोऽपि महाश्वेताया निर्व्यूढः; परन्तु महासौख्यसम्भारेऽस्मिन् दत्तसन्धि दौर्भाग्यं निभृतनिभृतं कदा कस्मात्कथं वा सम्प्रविष्टमिति न कोऽपि वेत्तुं शशाक। व्यतीतप्राय एव परिणयोत्तरमासे श्वसुरालयग्रामो मद्भगिन्या निष्करुणैराटविकशबरैराक्रान्तो निर्दयं लुण्ठितश्च। सान्द्रान्धकारे रजन्यामाक्रान्तारः कांश्चन पशुमारं मारितवन्तः, कांश्चन कुटीरस्तम्भेषु संयतवन्तः, कांश्चन युवकांश्च सबलात्कारं सार्धं नीतवन्तः। ममानुत्तोऽपि तेषामेव शबरापहृतानां यूनामन्यतम आसीत्।

व्यवसितेऽस्मिन् दारुणव्यतिकरे विपन्नं जातं महाश्वेताजीवनम्। उपावर्ततासौ पितुर्गृहम्। मम तातपादस्तु महाश्वेताविपदभिभूत एव समयात्प्राक् निजेहलीलां संवृतवान्। उभयमपि कुलं कन्यकायास्तस्याः कुलिशप्रहारातिशायिनं दुर्भाग्यक्रममसहमानं विषादकवलितं सञ्जातम्। ह्रीणा हर्षसम्भाराः, क्षीणाः

क्षपोत्सवाः, ग्लानिमुपगतं गीतनृत्यवादित्रादिकम्, शून्यतामुपयाताश्शास्त्रचर्चाः, विरक्ता रागाः, स्मृतिशेषं स्मितकम्, सातङ्कोऽट्टहासः। किञ्च, परमार्थतोऽहासिषुः कुलद्वयं प्रसादमाधुर्यादिगुणाः। अवशिष्टं केवलं कारुण्यमेव।

भद्र! अद्य सत्यमिदं प्रकाशये यत्कान्यकुब्जेश्वरस्य हर्षदेवस्य राजकविप्रतिष्ठाऽङ्गीकारेऽपि मम भगिनी महाश्वेतैव कथञ्चित्कारणभूता। यतो हि नृपतेर्भगिन्यां महीयस्यां राजश्रियि स्वभगिन्या महाश्वेतायाः प्रतिच्छविमहमपश्यम्। अत एव स्वसृसंरक्षणपरे हर्षदेवे, सत्यपि ममावमन्तरि मम प्रीतिर्जाता।

जानात्येव भवान् यत्तातपादो मे सुगृहीतनामधेयश्चित्रभानुर्महान् ज्योतिर्विदासीत्। सर्वमपि त्रैकालिकं वृत्तं हस्तामलकमिव तस्य प्रत्यक्षमभासत। मृत्योः प्रागेव घुष्टं तेन यदक्षतस्तिष्ठति महाश्वेतायाः पतिः। किञ्च, कस्मिंश्चिद्दिने सोऽवश्यमेवोपावर्तिष्यते स्वगृहम्। पितुर्वचनमिदं समेषामेव कुटुम्बिनां कृते श्रुतिवाक्यभूतं प्राणपाथेयभूतञ्चासीत्। तदाकर्ण्य तनयाविपद्भारभुग्नाया मे पितृष्वसुर्दुःखं किञ्चिन्न्यूनं सञ्जातम्। अहमपि विविधोपायैर्भगिन्याश्चित्तमनुरञ्जयितुं प्रयत्नपरोऽभवम्। दावाग्निपरिप्लुष्टप्राया नवमालिकाऽकालजलदवर्षणेन परिरक्षिता, तथाप्यभिनवकिसलयप्रसूनाद्युपगमार्थं तया वसन्तः प्रतीक्षणीय आसीत्।

भद्र! पताकावृत्तमनाख्याय मूलकथेयं महाश्वेतायाः पूर्तिं नोपैष्यति। किञ्च, तस्याः पताकाकथाया नायकोऽप्यहमेवास्मि। ततोऽपि श्रोतव्येयं प्रासङ्गिकी कथा। महाश्वेतायाः प्रतिवेश एवासीत् कश्चनाऽन्योऽपि कुटुम्बः सद्धर्माचरणपरायणो यस्मिन् विलसन्ति स्म विश्रुतयशसोऽनेकेऽनूचाना दैवज्ञा भिषजो देशिकाश्च। कुटुम्बिनामन्यतमस्य मयूरभट्टस्य कन्या कदम्बप्रिया मद्भगिन्या महाश्वेतायाः प्रतिबिम्बभूता विश्वस्ता च सखी जाता। निशीथन्येव ते पृथगकरोत्। समानरूपसम्पदौ समानगुणे समानाभिरुचिके समानशीलसमुदाचारे च ते सर्वान् विस्मापयतः स्म।

मां तत्र नियतागन्तारमवेक्ष्य सद्वंशोत्पन्नञ्च विज्ञाय मयूरभट्टः कदा मयि जामातृबुद्धिं न्यस्तवानित्यहमपि न सुष्ठु ज्ञातवान्; परन्तु अकस्मादेवाचिरो-परूढयौवनायाः कदम्बप्रियायाः परिवर्तितव्यवहारानवलोक्य ममापि विस्मयो जातः। न सा पूर्वमिव मया सार्धं वार्ताक्रमं प्रावर्तयत्, न चापि निर्विघ्नं मत्सम्मुखीनाऽतिष्ठत्। ततश्चैकस्मिन् दिवसे महाश्वेतैव रहस्यमिदमवगमयन्ती मां सूचितवती यत्कदम्बप्रियया सार्धं ममोद्वाहप्रस्ताव उभाभ्यामपि पक्षाभ्यामङ्गीकृतः।

एतदाकर्ण्यैव मन्मानसाम्बुधिः समुज्जिजृम्भे कदम्बप्रियाननेन्दुं चुम्बितुम्; परन्तु महाश्वेतया ज्ञापिततदभिप्रायाऽसौ न मत्समक्षमागतवती।

तस्मिन्नेव मासे विवाहसंस्कारस्सम्पन्नः। मम शैशवक्रीडाशुकी चिरपरिचिता कदम्बप्रिया पत्नीभूय मद्गृहमागता। विरलकुटुम्बिनि मम कुटुम्बेऽरण्यप्रख्ये वासन्तीसुषमेव समवातरत्। मत्प्रसूप्रतियातनाभूता सुनन्दाऽपि स्नुषालभ्यं बहुमानमात्मसात्कुर्वती सततामोदनिर्भरा जाता। पितृचरणोऽपि मे कदम्बप्रियोपनत-समादरपरिचर्यासन्ततिमनुभूय मम जनन्या अभावं केनचिदंशेनाधरीकृतवान्। ततश्च वर्षानन्तरमेव भूषणभट्टोऽपि जनिं लेभे। भूषणागमनेन सकलाऽपि गृहसमृद्धिः परां काष्ठामधिरूढा।

तस्मिन्नेव वर्षे महाश्वेतायाः परिणयोऽपि सम्पन्नः। ततश्च शबराक्रमणवृत्तं घटितम्। वर्षानन्तरमेव पितृचरणो दिवङ्गतः। ततश्च भूषणं सप्तवर्षीयं विहाय मद्भार्या कदम्बप्रियाऽपि लोकान्तरनिवासप्रीतिं प्रदर्शयन्ती मामेकाकिनं त्यक्तवती। अनेन नृशंसदुर्घटनाचक्रेण समुत्सन्नं जातं मम गार्हस्थ्योद्यानम्, प्राङ्मातुर्वियोगस्ततो महाश्वेताविपद्व्यतिकरस्तदनु तातपादानामभावोऽन्ते च जीवनदीपशिखायाः परिनिर्वाणम्। हृदयं विशीर्णमिव जातं धातुर्नृशंसतामवेक्ष्य। जिजीविषैव प्रणष्टा। क्व गन्तव्यम्? किं करणीयम्? कथमात्मा विपन्नोऽवलम्बनीयः? न किञ्चिदपि निश्चेतुं शक्यमासीत्।

एकतो महाश्वेताया विपदितिवृत्तम्। गृहपरिसरे तातपादानामभावजन्या दारुणव्यथा। गृहाभ्यन्तरे च कदम्बप्रियाया हृदयोन्माथिनी स्मृतिः। शोणतटमुपगम्य पाषाणशिलायामुपविश्य मुषित इव, कदर्थित इव, भृशमवमत इव, किंकर्तव्यविमूढ इव प्रभातात्सन्ध्यां यावत्कालमनैषम्। शिवालयगमनेऽप्यश्रद्ध इवाभवम्। चतुर्विंशतिवर्षदेशीय एव सन्नपि शरीरेण, चेतनया मनसा च वार्धक्यजर्जर इव जातोऽहम्।

मामेतदवस्थमवलोक्य सर्वेऽपि शैशववयस्याः सम्भूय समागताः सान्त्वयितुम्। ते मां प्रबोधितवन्तः—मित्रवर्य! न वयं भवादृशाः शास्त्ररसायनपायिनः पण्डिताः। ततश्चैव भवन्तं प्रबोधयितुमप्यक्षमाः; परन्तु धात्रोट्टङ्कितं भालपट्टलेखं मृषा कर्तुं को नु शक्तः? सर्वगुणसम्पन्नोऽपि नैषधो नलः किं विपद्ग्रस्तो नाऽभूत्? मर्यादापुरुषोत्तमोऽपि दाशरथिः किं कान्तारवासव्यथां प्रियापहरणजन्यावमानं न सोढवान्? अयुतसंख्यसिन्धुरबलोऽपि मध्यमपाण्डवः किं मत्स्येश्वरमहानसे भोजनं न पपाच? सङ्गरजितत्रिपुरान्तकोऽपि सव्यसाची किं

बृहन्नलावृत्तिं नाऽवललम्बे? परन्तु न कोऽप्येतेषां जिजीविषां तत्याज। तन्महानुभाव! सन्धारयात्मानम्। चटकोऽपि नाम, वात्ययोत्सादिते सति कुलाये नवनीडनिर्माणं करोत्येव। वृक्षोऽपि, निकृत्ते सति शाखाचये शाखान्तरप्ररोहान् जनयत्येव। एतत्सर्वं दृष्टान्तीकुर्वताऽपि भवता कथमात्मा सन्तप्यते! न भवानेकलः। न भवानसहायः। न भवान्निरुपायः। सन्त्यनेकेऽभ्युपाया आत्मविनोदस्य। तद्यदि भवाननुमन्येत, सर्वेऽपि भवच्छैशववयस्या वयं नृत्यगीतवादित्रकुशला विषोपचारेन्द्रजालप्रदर्शनरदक्षा भवन्नेतृत्वे नाट्यप्रयोग-मनुष्ठाय सहृदयहृदयानुरञ्जनं कुर्याम। एतेन भवच्चित्तवृत्तिपरिवर्तनमपि भविता, कुलक्रमागतस्य विद्याविनोदस्य कलात्मक उपन्यासोऽपि वात्स्यायनवंशसमज्ञां संवर्धयिष्यति। शास्त्राभ्यासो नाम निश्चप्रचमौदासीन्यवर्धक एव; परन्तु नाट्यं नाम त्रिवर्गसाधनभूतं सद्यःपरनिर्वृतिकरञ्च। मन्निवेदनं श्रुत्वा मित्रवर्या एव प्रमाणमिति।

नाट्यप्रयोगप्रस्तावं श्रुत्वैव विद्युदुन्मेष इवाभ्यन्तरे मे समजनि। प्रगाढस्वापमग्नो मम कलाकारोऽकस्मादेव प्रबुद्धः। महापण्डितचित्रभानुपुत्रोऽयं शास्त्रमन्थनसरणिमपहाय लोकविनोदपरायणः कलाजीवी सञ्जातः। ततश्च यत्संवृत्तं, तन्नाविदितचरं भवतोऽपि भद्र! काव्यनाट्यकलाविलासेन लक्षकोटिमितानामपि सहृदयानां हृदयानि जित्वा, कस्यचिदेकस्याऽसहृदयस्य हृदयं जेतुं बाणभट्टोऽयं नाऽशकत्। तस्मादेव कान्यकुब्जं विहाय पुनरपि प्रीतिकूटमुपावृत्तोऽस्मि। भद्र! मनुष्यकल्पः कोऽपि हर्षः परित्यक्तो मया; परन्त्वीश्वरकल्पो हर्षोऽत्र समवाप्तो यतो हि सुखिनी महाश्वेतेदानीं स्ववल्लभेन सार्धम्।

निसर्गादेव कलासक्तोऽहमासम्। यद्यपि कुलपरम्पराऽनुरोधात् त्रयी मयाऽभ्यस्ता। शास्त्राण्यधीतानि। तन्त्रमन्त्रादिसंविधानकेऽपि परिश्रमः कृतः, तथापि ललितोचितसन्निवेशचारु काव्यमेव मह्यं सविशेषमरोचत। नाट्यप्रयोगेऽपि महत्यभिरुचिरासीत्। उदारदृष्टिस्तातपादोऽपि कुलक्रमागतदुर्धर्षपाण्डित्याभि-मानरक्षणदृष्ट्या मां शास्त्रादिपरिशीलनार्थमेव नितरां प्रेरयामास, तथापि कविकर्मणि काव्यप्रस्तुतौ चासीदेव तत्पक्षपातः। अद्याऽहं स्मरामि तस्य कादाचित्कं प्रीतवचनम्—

वत्स! या निम्नगा समतलभूमिभागे शान्तं स्थिरं निर्विघ्नञ्च प्रवहति, सैव हस्तिनखे प्रदेशे दुर्वारतीव्रगत्या पुरस्सरति; किन्तु समवाप्य पर्वतशिलान्तभूमिं गर्ते प्रपतन्ती सैव भैरवाकृतिर्जायते। तथैव कविप्रतिभा समवाप्य कोमलकान्तपदावलीं ललितोदात्तसंवेदनाञ्च सहृदयहृदयहारिकाव्यविग्रहमाधत्ते। शास्त्रार्थप्रभृति-

पाण्डित्यप्रदर्शनसन्दर्भे सैव प्रतिभा वितण्डाछलजातिनिग्रहस्थानाद्युपस्कृता वेगवती प्रतीयते। किञ्च, दुरारोहक्लिष्टशास्त्रमन्थनव्यापृता सैव प्रतिभा रुक्षाऽतिरुक्षा कठिनाऽतिकठिना जायते; परन्तु किमेतावता? विविधाऽध्वाऽध्वनीनेनायुष्मता भवितव्यम्। इति।

भद्र! अनेन वाचिकेन तातपादस्य मे सहृदयता स्फुटीभवति। नासीदसौ गताऽनुगतिकः। न चापि तातकूपधिया क्षारसलिलपायी। तदुदारदृष्टेः प्रसङ्गान्तरमेकमपरं स्मर्यते मया। तातपादैः सार्धं शिवालयं गतवता मया कस्मिंश्चित्सान्ध्यकाले स्तुतिपद्यमेकं गीतम्—जयन्ति बाणासुरमौलिलालिता इत्येवमादि। तत्पद्यं निशम्यैव सञ्जातरोमहर्षो जनको मेऽवसिते समर्चनोपक्रमे मां सस्नेहमपृच्छत्—आयुष्मन्! कुतस्त्यमिदं स्तुतिपद्यम्?

—तात! मयैव यथाकथञ्चित्प्रणीतम्। त्रपाभारभुग्नोऽहमकथयम्।

—साधु साधु! चिरञ्जीव। वत्स! प्रीतोऽस्मि पद्येनानेन। वंशकीर्तिं संवर्धयिष्यसि त्वम्। इत्येवमादि भणन्नेव तातपादो मां प्रगाढालिङ्गने बबन्ध।

सन्दर्भमिमं श्रावयतो महाकवेर्लोचनद्वन्द्वं सजलं जातम्। पुनरसौ वार्ताक्रमं प्रावर्तयत्—भद्र! नाट्यप्रयोगैर्लोकानुरञ्जनं सम्पादयता सरसकविगोष्ठीभिर्देववाणीं जनमानसे प्रतिष्ठापयता च मया दिवङ्गतानां तातपादानां सैवाकाङ्क्षा पूरिता। सैव तदुदारदृष्टिः सार्थक्यमुपनीता। न मया तदिच्छाप्रतिकूलं वंशप्रतिष्ठाविरुद्धं वा किमप्याचरितम्। ललितमार्गाश्रयेण कोमलाभिरुचिसंवर्धनेन वा न मे दुर्धर्षशास्त्रमन्थनमीषदपि क्षीणम्। तथापि अकारणवैरिभिः खलैः कैश्चित् कान्यकुब्जेश्वरं प्रसादयितुमस्मद्विषये नतोन्नतं श्रावितमेव।

भवतु! शिवाऽनुग्रहमात्राकाङ्क्षिणो बाणभट्टस्य जीवने राजानुग्रहप्रसङ्गोऽप्यसौ स्वप्नकल्प एवाऽऽसीत्। स्वप्नस्तु स्वप्न एव! तद्विस्मृतावेव भव्यमस्माकम्। भद्र! स्वप्नाः सम्भवन्ति रात्रावेव, प्रगाढनिद्रायामेव; परन्तु सा रात्रिर्मया व्यतीता कान्यकुब्ज एव। स्वप्नोऽप्यसौ विलीनस्तस्यामेव रात्रौ। सम्प्रति विलसति दिनं भास्करातपमण्डितम्। प्रबुद्धोऽस्मि। प्रोन्मीलितलोचनोऽस्मि।

भद्र! यदवाप्तं राजानुग्रहपारितोषिकं तदधिकं मया समर्पितं हर्षदेवाय तच्चरितं प्रणीय। सम्प्रति प्रीतिकूटस्थस्सन् प्रारब्धप्रीतिकथां पूरयिष्यामि। अस्यामतिद्वय्यां कथायां भविष्यति मद्भगिनी महाश्वेता, भविष्यति तद्वल्लभः

पुण्डरीकः, भविष्याम्यहं, भविष्यति मत्सहचरी कदम्बप्रिया। आक्रान्ता शबरसेनापतिरपि भविष्यति कथायामस्याम्। निखिलाऽप्यस्मज्जन्मभूमिर्विन्ध्याटव्युपान्तभूता वृत्तेऽस्मिन् प्रतिबिम्बिता भविष्यति। यथार्थकल्पनयोः सङ्गमस्थली भविष्यति कथेयम्।

सम्प्रति विश्राम्य त्वम्। श्वस्तने प्रभाते महाश्वेतां द्रष्टुं तदग्रहारमावां गमिष्यावः। एहि, भवनमेव गच्छावः।

उत्तिष्ठ, चायपेयमानीतवत्यस्मि। पत्न्यास्तारस्वरं श्रुत्वाऽकस्मादेव प्रगाढनिद्रा मे तावदेव भग्ना। हतप्रभ इवाऽहमुत्थाय पत्नीमवोचम्—भो, महाकविना बाणभट्टेन सार्धं महाश्वेतां द्रष्टुं गन्तास्मि!

साट्टहासमर्धाङ्गिनी प्रोवाच—भो, संस्कृताध्यायकानामयमेव दोषो यत्ते स्वप्नेऽपि कादम्बरीरघुवंशादिकमेव पाठयन्ति। भवतु, प्रथमं तावत्पश्य स्वकीयां महाकालीं माम्। पश्चान्महाश्वेतां द्रक्ष्यसीति।



# क्क्ङिति चेति सूत्रार्थविचारः

**डॉ. गिरिजेशकुमारदीक्षितः**
उपाचार्यः, व्याकरणविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी



अत्र सूत्रे ककारात्पूर्वं चर्त्वेन गकारस्यापि निर्देशः। तेन क्क्ङितीत्यस्य 'गित्त्वे कित्त्वे ङित्त्वे' चेत्यर्थः सम्पद्यते। तथा च यं प्रत्ययमाश्रित्येग्लक्षणे गुणवृद्धी विधीयेते, तस्याश्रियमाणस्य प्रत्ययस्य गित्त्वे कित्त्वे ङित्त्वे च सति ते इग्लक्षणे गुणवृद्धी न भवत इति सूत्रार्थः। तत्र गित्त्वे 'जिष्णुः', कित्त्वे 'स्तुतः', ङित्त्वे च 'चिनुतः' इत्यादीन्युदाहरणानि बोध्यानीति।

अत्र तावत्सर्वतः पूर्वमिदं विचार्यते यत् 'जिष्णुः' इत्यत्र 'ग्लाजिस्थश्च क्स्नुः[१]' इत्यनेन क्स्नुप्रत्यये सति 'क्ङिति च[२]' इति गुणनिषेधे 'जिष्णुः' इत्यस्य सिद्धिर्भवति। न चैवं जिष्णुरिति कित्त्वस्योदाहरणं भवितुमर्हति, न तु गित्त्वस्येति विचिकित्सायामुच्यते क्ङिति चेत्यस्य सूत्रस्य न्यासे—'क्स्नुप्रत्ययोऽयं यदि कित् स्यात्तर्हि 'स्थास्नुः' इत्यत्र 'घुमास्थागापाजहातिसां हलि[३]' इति सूत्रेण तिष्ठतेरीत्त्वं स्यात्। अतस्तत्परिहाराय क्स्नोर्गित्त्वं प्रतिज्ञायते। तथा हि 'ग्लाजिस्थश्च क्स्नुः[४]' इत्यत्रोक्तं गिच्चायं प्रत्ययो न कित्। तेन स्थ ईकारो न भवतीति।

नन्वेवं क्स्नोर्गित्त्वे सति 'जिष्णुः' इत्यत्र 'क्क्ङिति च[५]' इति प्रतिषेधो न स्यादित्यत आह—गकारोऽप्यत्र चर्त्वभूतो निर्दिश्यते। चर्त्वं भूतः = चर्त्वं प्राप्त इत्यर्थः। अत एव गकारप्रश्लेषात् संख्यातानुदेशो न भवति। अन्यथा क्ङितौ द्वौ, गुणवृद्धी अपि द्वे—इति संख्यातानुदेशः प्राप्नोति। तथा सति किति गुणस्य, ङिति

---

१. पा.सू. ३।२।१३९।
२. पा.सू. १।१।५।
३. पा.सू. ६।४।६६।
४. पा.सू. ३।२।१३९।
५. पा.सू. १।१।५।

वृद्धेर्निषेध इत्येवं स्यात्, न चैवमवलोक्यते। अथवा यदयं 'मिदेर्गुणः'[१] इति श्यनि ङिति गुणं शास्ति तज्ज्ञापयत्याचार्यः 'नात्र संख्यातानुदेशो भवति' इति। तथा चैतज्ज्ञापकाद्वा नात्र संख्यातानुदेशः।

नन्वेवमपि यदि हि क्स्नोर्गित्त्वमिष्यते तर्हि 'भूष्णुः' इत्यत्र 'श्र्युकः किति'[२] इति किति प्रतिषेध उच्यमानोऽत्र कित्त्वाभावान्न स्यादिति मनसि निधायोच्यते न्यासे—'नैष दोषः, तत्रापि चर्त्त्वभूतो गकारो निर्दिश्यते'। तथा हि 'ग्लाजिस्थश्च क्स्नुः'[३] इत्यत्र जयादित्यवृत्तौ ग्रन्थः—'क्ङिति च'[४] इत्यत्र गकारश्चर्त्त्वभूतो निर्दिश्यते। तेन गुणो न भवति। 'श्र्युकः किति'[५] इत्यत्रापि गकारो निर्दिश्यते। तेन भुव 'इड्' न भवतीति। 'श्र्युकः किति'[६] इत्यत्रापि जयादित्यवृत्तौ ग्रन्थः—'गकारोऽप्यत्र चर्त्त्वभूतो निर्दिश्यते। 'भूष्णुः' इत्यत्र यथा स्यादिति।

वामनस्य त्वेतत्सर्वमनभिमतम्। तथा हि तस्यैव सूत्रस्य तद्विरचितायां वृत्तौ ग्रन्थः—"केचिदत्र द्विककारनिर्देशेन गकारप्रश्लेषं वर्णयन्ति, भूष्णुरित्येवं यथा स्यात्। सौत्रत्वाच्च निर्देशस्य 'श्र्युकः किति'[७] इत्यत्र चर्त्त्वस्यासिद्धत्वमनाश्रित्य 'हशि च'[८] इति रोरुत्वं न कृतम्, 'कुप्वोः ᳲकᳲपौ च'[९] इति विसर्जनीयश्च कृत इति। 'ग्लाजिस्थश्च क्स्नुः'[१०] इत्यत्र 'स्था आ' इत्याकारप्रश्लेषेण स्थास्नोः सिद्धत्वान्न किञ्चिदेतत्" इति। स एवं मन्यते—यदि क्स्नुप्रत्ययस्य कित्त्वे सति तिष्ठतेरीत्त्वं प्राप्नुयात्तदा तत्परिहारार्थं गित्त्वं युज्यते प्रतिज्ञातुम्। गित्त्वे च सति 'जिष्णुः', 'भूष्णुः' इत्यत्र यथायोगमिड्गुणयोर्निरासाय 'क्ङिति च'[११] इत्यत्र 'श्र्युकः किति'[१२] इत्यत्र च गकारश्चर्त्त्वभूतो निर्दिश्यमानः शोभेत, न च क्स्नुप्रत्ययो गित्, किं तर्हि किदेव। तत्किमिड्गुणप्रतिषेधार्थेन चर्त्त्वभूतगकारस्य निर्देशेन। न च क्स्नोः कित्त्वे सति तिष्ठतेरात्वं प्राप्नोति। तस्मात्—" 'ग्लाजिस्थश्च क्स्नुः'[१३] इत्याकारप्रश्लेषः कृतः। क्स्नुप्रत्ययान्तस्य तिष्ठतेराकार एव यथा स्यात्,

---

१. पा.सू. ७।३।८२।
२. पा.सू. ७।२।११।
३. पा.सू. ३।२।१३९।
४. पा.सू. १।१।५।
५. पा.सू. ७।२।११।
६. पा.सू. ७।२।११।
७. पा.सू. ७।२।११।
८. पा.सू. ६।१।११४।
९. पा.सू. ८।३।३७।
१०. पा.सू. ३।२।१३९।
११. पा.सू. १।१।५।
१२. पा.सू. ७।२।११।
१३. पा.सू. ३।२।१३९।

यदन्यत्प्राप्नोति तन्मा भूत्'' इत्येवमर्थः। ततश्च तेनैव सिद्धत्वात् स्थास्नु-शब्दस्याकिञ्चित्करमिह गकारप्रश्लेषवर्णनमिति।

इग्लक्षणे इति किम्? लैगवायनः। 'ओर्गुणः'[१] इति निर्दिष्टस्थानिकत्वादिक्पदानुपस्थित्या फकः कित्त्वेऽपि तन्निमित्तको गुणो यथा स्यात्। अत एव 'कामयते' इत्यत्र कमेर्णिङो ङित्त्वेऽपि तमाश्रित्य 'अत उपधायाः'[२] इति वृद्धिर्धात्वकारस्य भवत्येव। आश्रित्येति किम्? छिन्नम्, भिन्नमित्यादौ लघूपधगुणोऽपि यथा न स्यात्।

अत्र 'इको गुणवृद्धी'[३] इत्यत इक इत्यनुवर्तते, गुणवृद्धी इति च। तथा च क्क्ङितीत्यनेनेको विशेषणे क्क्ङिति परतो य इगित्यर्थे 'तस्मिन्निति निर्दिष्टे पूर्वस्य'[४] इति परिभाषोपस्थितौ निर्दिष्टशब्दस्याव्यवहितोच्चारितार्थकतया 'चितम्, स्तुतम्' इत्यादौ किदाव्यवहितपूर्ववर्तिन एवेको गुणनिषेधे चितम्, स्तुतमित्यादावेव गुणनिषेधः स्यान्न तु भिन्नम्-भिन्नवानित्यादौ दकारेण व्यवहितत्वात्।

तस्मात् क्क्ङितीति गुणवृद्धिविशेषणमेव। ततश्च नेयं परसप्तमी, क्क्ङिति परे गुणवृद्ध्योरविहितत्वात्। अन्यथा विकल्पापत्तेः; किन्तु निमित्ततामात्रे। तच्चेगन्तेऽव्यवधानेन, लघूपधे व्यवधानेनेति यथाप्राप्तं गृह्यते, अनुवादस्य यथाप्राप्तपरत्वनियमात्। निमित्तत्वमपि सार्वधातुकत्वादिना तत्तद्विधौ श्रूयमाणेन धर्मेण। क्ङिदादौ निषेधसामर्थ्याद्विधिवाक्येषु तदनुल्लेखाच्च। यद्यपि निमित्तत्वं सप्तम्यर्थो विशिष्य नोक्तस्तथापि 'क्ङिति सति प्राप्ते ये गुणवृद्धी' इति सम्बन्धे अर्थात्तत्प्रत्ययस्य निमित्तत्वं पर्यवस्यतीत्याहुः।

'रलो व्युपधाद्धलादेः संश्च'[५] इत्यादिना कित्त्वातिदेशश्चात्र मानम्। अन्यथा व्यवधानेन गुणनिषेधाप्रवृत्तौ तदर्थकित्त्वस्य वैयर्थ्यापत्तेः।

वस्तुतः क्क्ङितीत्यत्र विशेष्याकाङ्क्षायां 'न धातुलोप आर्धधातुके'[६] इति सूत्रस्थार्धधातुकपदेन तिङ्शिद्भिन्नत्वे सति धात्वधिकारोक्तप्रत्ययत्वेन रूपेण तत्समर्पणेऽपि विशिष्टस्यात्र विशेष्यत्वस्वीकारे 'सार्वधातुकमपित्'[७] इत्यादीनां

१. पा.सू. ६।४।१४६। २. पा.सू. ७।२।११६।
३. पा.सू. १।१।३। ४. पा.सू. १।१।६६।
५. पा.सू. १।२।२६। ६. पा.सू. १।१।४।
७. पा.सू. १।२।४।

व्यर्थत्वापत्त्या सत्यन्तम्परित्यज्य धात्वधिकारोक्तप्रत्ययत्वमेव विशेष्यतावच्छेदकम्। विशिष्टवाचकपदानां सति बाधकत्वे विशेष्यमात्रपरत्वस्य लक्षणां विनैव स्वीकारात्।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः[१]।।

इत्यत्र श्रुतिशब्दस्य प्रमाणशब्दमात्रपरत्वाङ्गीकारात्। ततश्च प्रत्ययेनाङ्गस्योपस्थित्या लघूपधस्याङ्गस्याव्यवधानादुभयत्रापि निषेधसिद्धिः, अङ्गापेक्षस्यैवाव्यवधानस्य स्वीकारात्[२]। इहान्ये वैयाकरणा मृजेरजादौ सङ्क्रमे विभाषा वृद्धिमारभन्ते क्ङित्यचि वा इति 'इको गुणवृद्धी'[३] इति सूत्रे भाष्यम्[४]। सङ्क्रमो गुणवृद्धिप्रतिषेधहेतुभूतः क्ङित्प्रत्ययः, पूर्वाचार्यसङ्केतात्। अजादौ क्ङिति प्रत्यये परे मृजेर्विकल्पेन वृद्धिर्भवतीति तस्यार्थः। मृजन्ति, मार्जन्ति।

अत्र हरदत्तः[५]—'यस्मिन्विधिस्तदादावल्ग्रहणे'[६] इति परिभाषयैव सिद्धौ 'अजादाविति' वचनं मुख्याजादिग्रहार्थम्। तेन व्यपदेशिवद्भावेनाजादौ न भवति। यथा 'पूयं ममृज, त्वया ममृजे' इति। अत्र केचिदेवं वदन्ति—तथापि ममृज इत्यत्र विकल्पो दुर्वारः। लिटि मध्यमपुरुषबहुवचनस्य थस्य स्थाने विधीयमानोऽकारादेशोऽन्त्यस्य प्राप्नोति। न चैवं विधिवैयर्थ्यम्, थकारोत्तराकारस्य तत्र स्वत एव सत्त्वादिति वाच्यम्, णलादीनां यथासंख्यसम्पादनेन सार्थक्यादित्याशङ्क्य अकारद्वयात्मकोऽयमादेशोऽनेकाल्त्वात्सर्वस्य।

यद्वा 'धातोः'[७] इत्यधिकाराद्धातोः परस्य थस्याकारविधाने 'आदेः परस्य'[८]

---

१. सांख्यप्रवचनभाष्यम्, पृ. १।
२. पा.सू. १।१।५ (प्रदीपे कैयटः)।
३. पा.सू. १।१।३।
४. एवं तर्हीहान्ये वैयाकरणा मृजेरजादौ सङ्क्रमे विभाषा वृद्धिमारभन्ते। परिमृजन्ति, परिमार्जन्ति, परिमृजन्तु, परिमार्जन्तु, परिममृजतुः, परिममार्जतुरित्याद्यर्थम्। तदिहापि साध्यम्। तस्मिन् साध्ये योगविभागः करिष्यते (मृजेर्वृद्धिरचः) मृजेर्वृद्धिरचो भवति। ततः—'अचि क्ङिति'। अजादौ च क्ङिति मृजेर्वृद्धिर्भवति। परिमार्जन्ति, परिमार्जन्तु, परिममार्जतुः। किमर्थमिदम्? नियमार्थम्, अजादावेव क्ङिति, नान्यत्र। क्वान्यत्र मा भूत्? 'मृष्टः' मृष्टवानिति। ततो 'वा'। वाऽचि क्ङिति मृजेर्वृद्धिर्भवति। परिमृजन्ति, परिमार्जन्ति, परिममृजतुः, परिममार्जतुरिति। (महाभाष्यम्, पा.सू. १।१।३)।
५. पदमञ्जरी, पा.सू. १।१।५।
६. परि. ३३।
७. पा.सू. ३।१।९१।
८. पा.सू. १।१।५४।

इति परिभाषया थकारस्यैवाकारः, उभयथापि 'अतो गुणे'[1] इति पररूपमिति भाष्ये स्पष्टम्। तस्य स्थानिवद्भावेन मुख्याजादित्वमस्त्येवेति।

अन्ये त्वाहुः—व्यपदेशिवद्भावनिबन्धनाजादित्वस्येव स्थानिवत्त्व-निबन्धनस्यापि तस्य गौणताया वक्तुं शक्यत्वान्नेदं साधीयः; किन्त्वजादाविति न विधिवाक्यशरीरम्, येनोक्तमर्थं ज्ञापयेत्; किन्तु 'क्ङित्यचि वा' इति तदुत्तरभाष्यपठितमेव। पूर्वभाष्यस्थमजादिपदं तु अचीत्यस्य 'यस्मिन्०'[2] इति परिभाषासिद्धार्थानुवादमात्रम्। अतो न हरदत्तोक्तं युक्तम्। अत एव ममृजेत्यत्र भिदादिपाठादङ् गणपाठादेव वृद्ध्यभाव इत्याह—**आत्रेयः**।

अत एव **मैत्रेयरक्षितेनापि धातुप्रदीपे** तुन्दपरिमृजस्तुन्दपरिमार्ज इत्युभयं दर्शितम्। **दुर्घटवृत्तौ** तु 'तुन्दपरिमृजः' इत्यत्र व्यवस्थितविभाषया वृद्धिर्नेत्युक्तम्। अत एव **धातुवृत्तिषु** पूयं ममृज, ममार्जेति रूपद्वयमुदाहृतम्।

इदं चान्यदप्यवधेयम्। क्ङित्येव विकल्पारम्भाद् धात्वंशलोपनिमित्तत्वेन वृद्धिनिषेधहेतावच्प्रत्यये नायं विकल्प इत्यत्रोक्तम्। तत्सूत्रप्रत्याख्यानप्रस्तावे तु अतो लोपस्य स्थानिवद्भावमाश्रित्य यथोत्तरं मुनीनां प्रामाण्येन वृद्धिविकल्पो भवत्येवेत्युक्तम्, तच्चिन्त्यम्। सूत्रारम्भपक्षे यथारूपं तथैव तत्प्रत्याख्यानेऽपीति तत्र भाष्याभिप्रायस्यावश्यकत्वात्। तस्य चात्र हरदत्तोक्ताभिप्रायेणैव सिद्धेरिति दिक्।

ननु 'अचिनोत्', 'अमार्ट्' इत्यादौ स्थानिवद्भावेन तिबादेर्ङित्त्वात् 'क्ङिति च'[3] इति गुणवृद्धिनिषेधापत्तिः। न चानल्विधाविति तन्निषेधः शङ्क्यः? अनुबन्ध-कार्येष्वनल्विधाविति निषेधस्याप्रवृत्तेः। अन्यथाऽचिनवममार्जमित्यादावपित्त्वेन 'सार्वधातुकमपित्'[4] इति ङित्त्वापत्तेः। ज्ञापकं चात्र 'न ल्यपि'[5] इति सूत्रेणेत्त्वनिषेधः। अन्यथा क्त्वानिष्ठकित्त्वस्य स्थानिवद्भावेन ल्यप्यप्रवृत्तौ कित्त्वाभावादेवेत्त्वाप्रसक्तौ तद्वैयर्थ्यापत्तेः।

यत्तु 'सेर्ह्यपिच्च'[6] इत्यपिद्वचनं ज्ञापकमिति तन्न, 'शृणोहि विश्वतः प्रति' इत्यादौ 'स्थानेऽन्तरतमः'[7] इति परिभाषया पित्त्वादनुदात्तस्य सिपः स्थानेऽनुदात्तस्यैव हेः प्राप्तावुदात्तसम्पादनेन चरितार्थत्वात्। अपित्त्वसामर्थ्याद्धि

१. पा.सू. ६।१।९७। २. परि. ३३।
३. पा.सू. १।१।५। ४. पा.सू. १।२।४।
५. पा.सू. ६।४।६९। ६. पा.सू. ३।४।८७।
७. पा.सू. १।१।५०।

तत्रान्तरतमपरिभाषा बाध्यते। प्रतिपत्तिलाघवार्थमुदात्त इति वक्तव्येऽपिद्वचनं ज्ञापकमिति वाऽस्तु। न्यायसिद्धोऽप्ययमर्थः—'अनुबन्धानामनेकान्तत्वेन स्थानिकोटावप्रविष्टतया स्थान्यलाश्रयविधिविषयकस्यानल्विधाविति निषेधस्याऽप्रवृत्तेः। 'अनुबन्धा एकान्ताः'[१] इति मतेऽपि स्थानित्वप्रतीतेः प्रागेवान्तरङ्गेण लोपेन तेषामपहारात्।

तस्माल्लङाद्यादेशानां तिबादीनां स्थानिवद्भावेन ङित्त्वं दुर्वारमित्यत्राहुः—'यासुट् परस्मैपदेषु.'[२] इति सूत्रे ङिद्वचनं ज्ञापकम्—'लादेशानां स्थानिवद्भावेन ङित्त्वन्न भवतीति'। तथा च वार्त्तिकम्—लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्ग इति चेत्, यासुटो ङिद्वचनात्सिद्धमिति। अन्यथा लिङ्वद्भावप्रयुक्तङित्त्वेन तदादेशानां ङित्त्वे तदवयवस्य यासुटोऽपि तत्त्वात् 'यासुट् परस्मैपदेषूदात्तो ङिच्च'[३] इति ङिद्वचनं व्यर्थं स्यात्।

न च 'स्तुयात्' इत्यादौ 'उतो वृद्धिर्लुकि हलि'[४] इत्यस्या उत इति निर्दिष्टस्थानिकत्वेनानिग्लक्षणाया वृद्धेः, 'चिनुयुः' इत्यादौ—'क्ङिति च'[५] इति निषेधापवादस्य 'जुसि च'[६] इति गुणस्य च प्रतिषेधार्थं ङिद्वचनमस्तु, पुनर्ङित्त्वसामर्थ्यं विना स्थानिवत्त्वप्रयुक्तङित्त्वमात्रेण तन्निषेधस्यानुपपत्तेरिति कथं तस्य ज्ञापकत्वमिति वाच्यम्, 'उत औत्' इत्येव सिद्धे वृद्धिग्रहणेन 'संज्ञापूर्वको विधिरनित्यः'[७] इति वृद्धिनिषेधसिद्धेः। 'क्सस्याचि'[८] इत्यस्मादचीत्यनुवर्त्त्याजादौ जुसि गुणविधानात्, यासुटि कृते च जुसो हलादित्वसम्पत्तेः। यद्वा 'मिदेर्गुणो जुसि च' इति संहितापाठे 'अजुसि' इति छित्त्वाऽजादावुसि गुणविधानात्।

यत्त्वेवं 'चक्रुः, जह्रुः' इत्यादावतिप्रसङ्ग इति, तन्न। तस्याजादित्वव्यभिचाराभावेन विशेषणवैयर्थ्यापत्त्या तत्सामर्थ्येन जुस्येव पर्यवसानात्।

वस्तुतस्तु—अच्चासावुस् चेति न कर्मधारयः। उकारसकारात्मकसमुदायेऽजभेदस्य बाधितत्वात्। न चाच्पदमजादौ लाक्षणिकम्? गौरवात्। न चात्र

---

१. परि. ५। २. पा.सू. ३।४।१०३।
३. पा.सू. ३।४।१०३। ४. पा.सू. ७।३।८९।
५. पा.सू. १।१।५। ६. पा.सू. ७।३।८३।
७. परि. ९४। ८. पा.सू. ७।३।७२।

'यस्मिन्विधिस्तदादावल्ग्रहणे'[१] इति निर्वाहः। यस्मिन्निति सप्तम्यन्तानुकरणेनालः सप्तम्यन्तत्व एव तत्प्रवृत्तेः। अत्र च विशेष्येणान्वये तद्विभक्त्याऽस्य सप्तम्यन्तत्वे परिभाषाप्रवृत्तिः। तस्यां चाजादिपरत्वेन योग्यतासम्पत्त्या विशेष्यान्वय इत्यन्योऽन्याश्रयात्। एतेन—उजुसीतिच्छेदोऽपि निरस्तः। अत एवाचीति सप्तम्यन्तानुवृत्तिपक्ष एव सप्तमे भाष्यकृता[२] सिद्धान्तित इति दिक्।

न चैवं 'जुसि गुणे यासुट्प्रतिषेधः'[३] इति तत्रत्यवार्तिकवैयर्थ्यम्? उक्तरीतावेव तस्य तात्पर्यस्य तत्रोक्तत्वादिति।

न चैवमपि 'ब्रूतात्' इत्यत्र 'ब्रुव ईट्'[४] इतीडागमापत्तिः, तातङः स्थानिवत्त्वेन पित्त्वादिति वाच्यम्? 'अनित्यमागमशासनम्'[५] इति परिहारात्।

भाष्यमते तु 'सार्वधातुकमपित्'[६] इत्यत्र 'अपित्' इति योगो विभज्यते, ङिदिति चानुवर्तते। पर्युदासवृत्तिं नञं च पृथक्कृत्य ङित् पिन्न, पित् ङिन्न भवतीत्यावृत्त्या वाक्यद्वयं कल्प्यते। तथा च ङित्त्वपित्त्वयोः परस्परात्यन्ताभावव्याप्यत्वलाभे अर्थादौपदेशिकेनातिदेशिकस्य बाधः फलति। तेन 'ब्रूतात्' इत्यत्रेण्न। तातङ औपदेशिकङित्त्वेनान्तरङ्गेणातिदेशिकस्य बहिरङ्गस्य पित्त्वस्य बाधात्। 'अतिदिष्टादुपदिष्टं बलीयः'[७] इति न्यायात्।

'अचिनोत्' इत्यादौ त्वौपदेशिकेन तिबादीनां पित्त्वेन लाश्रयमातिदेशिकं ङित्त्वम्बाध्यते। तेन गुणादिसिद्धिः। अस्मिंश्च पक्षे यासुटो ङिद्वचनं न ज्ञापकम्; किन्तु 'मृज्यात्' इत्यादावप्राप्तङित्त्वविधायकम्। तेन च पित्त्वस्य 'चिनोति' इत्यादौ सावकाशस्य बाधोऽतः 'स्तुयात्' इत्यादौ 'पिति हलि' इति विधीयमाना वृद्धिर्न प्रवर्तते। 'चिनुयुः' इति तु प्राग्वदेव समर्थनीयम्। पूर्वोदाहृतवार्त्तिकमते तु 'ब्रूतात्' इत्यत्रेट् प्राप्नोति, 'आगमशासनमनित्यम्'[८] इति तु कथञ्चित्समाधेयः।

---

१. परि. ३३।

२. अथवाऽचीति वर्तते। तेन जुसं विशेषयिष्यामः। अजादौ जुसीति। (महाभाष्यम्, पा.सू. ७।३।८३)।

३. पा.सू. ७।३।८३।

४. पा.सू. ७।३।९३।

५. परि. ९५।

६. पा.सू. १।२।४।

७. परि. १३०।

८. परि. ९५।

वस्तुतस्तु 'हलः श्नः शानज्झौ'[१] इति शानचः शित्करणेन 'क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेधः प्रवर्त्तते' इति ज्ञाप्यते। तेन 'ब्रूतात्' इत्यादौ न कश्चिद्दोष इति। अत एव भाष्यमते 'भविषीष्ट' इत्यत्र ङित्त्वं न, 'करिष्यमाणा' इत्यत्रोगिल्लक्षणष्टिल्लक्षणश्च ङीब्नेति दिक्।



१. पा.सू. ३।१।८३।

# पातञ्जलमहाभाष्ये पर्यावरणविज्ञानम्

**डॉ. श्रीकान्तपाण्डेयः**
उपाचार्यः, व्याकरणविभागे
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी



शाब्दिकसमवाये महर्षिपतञ्जलिप्रणीतं पाणिनीयाष्टकस्य कात्यायनविरचित-वार्तिकानाञ्च व्याख्यानभूतं व्याकरणमहाभाष्यं सुप्रथितं विद्यते। ग्रन्थोऽयं विश्वकोष इव मन्यते संस्कृतवाङ्मये। यतो हि तत्र पाणिनीयसूत्राणां कात्यायनवार्तिकानाञ्च विवेचनप्रसङ्गे श्रीपतञ्जलिना विभिन्नानि भौतिकविज्ञानतत्त्वान्यपि प्रकरण-वशात्प्रकाशितानि। निबन्धेऽस्मिन् पातञ्जलमहाभाष्ये पर्यावरणविज्ञानमधिकृत्य कानिचित्तथ्यानि निरूप्यन्ते।

पर्यावरणविज्ञानमाधुनिकयुगे विश्वस्मिन् सर्वातिशायि चिन्तनीयं विज्ञानं वरीवर्ति। यतो हि पर्यावरणप्रदूषणहेतुना चराचरसृष्टिरव्यवस्थिता जाता येनाभिनवा अभिनवा रोगाः, क्वचिदतिवृष्टिः क्वचिच्चानावृष्टिः, क्वचिज्झंझावातः, क्वचिज्जलप्लावनञ्च दरीदृश्यते। पौरस्त्यपाश्चात्त्यवैज्ञानिकैरनुसन्धायेदं निश्चितं यद् भौतिकविज्ञानस्याधिकाधिकसुविधाभिर्मानवजातिः स्वां योजयितुं तासामुपभोगाय च प्रकृतेर्दोहनं प्रचुरमात्रायां कृतवती। पृथिव्यामाकाशे समुद्रे पातालेऽन्तरिक्षे च सर्वत्र भौतिकविज्ञानस्य हस्तक्षेपः सञ्जातः। वनानि विच्छिन्नानि, रासायनिकपदार्थैः सरःसरित्समुद्रजलानि प्रदूषितानि, आकाशे 'ओजोन' इत्याख्ये आवरणे (सूर्यस्य परावैंगनीकिरणानि भयङ्कररोगजनकानि सन्ति, तेषामवरोधकमिदमावरणम्) विशालं छिद्रं जातम्। यथा यथा रोगलक्षणविरोधिभेषजानामाविष्कारो भवति, तथा तथा विभिन्ना असाध्यरोगा जायन्ते। सन्ति चेमे पर्यावरणप्रदूषणस्योत्पाताः।

किमिदं पर्यावरणं प्रदूषणञ्चेति प्रथमतः समासेन प्रस्तूयते। परितः आवरणं पर्यावरणमत्र 'परि', 'आ' इत्युपसर्गाभ्यां वृञ्[१]-धातोर्ल्युटि[२] प्रत्यये सति पर्यावरणशब्दो निष्पद्यते। आवरणञ्च पृथिव्यप्तेजोवाय्वाकाशात्मकं प्रकृतिरेव तात्पर्यविषयतामञ्चति। प्रत्यग्रप्रयुज्यमाने पर्यावरणे मुख्यतया वातावरणस्याध्ययनं

---

१. धातुपाठः-१२५४; २. पा.सू. ३।३।११७।

सम्पद्यते। पूर्वं हि वातावरणस्याध्ययनं भूगोलविज्ञाने यत् क्रियते स्म तस्यैवाधुना मानववातावरणसम्बन्धे विधीयते। वस्तुतो भूगोलविज्ञानमपि पृथिव्यां समस्तमानवसमुदायस्य तथा तस्य प्राकृतिकवातावरणस्य परस्परं क्रियाशीलाया विस्तृतायाः प्रणाल्या अध्ययनं भवति[१]।

वातावरणस्य . शाब्दिकोऽर्थो विद्यते 'आवरणमेकप्रकारकम्'। अर्थात् प्राकृतिकसांस्कृतिकतत्त्वानामेकमावरणमथवा विन्यासो यो मानवमावृतं कृतवान् तथा यस्मिन् मानवो वसति, जीविकोपार्जनं विधत्ते, निर्माणं करोति, कलासाहित्ययोरानन्दमनुभवति, अपि च विविधा जीवनोपयोगिनीः क्रिया निर्वर्त्तयति। . पर्यावरणवातावरणपरिवेशपरिस्थितिशब्दाः पर्यायाः। आङ्ग्लभाषायां पर्यावरणस्य कृते Envarronment (एनवायरनमेण्ट) शब्दः प्रयुज्यते।

वातावरणस्य लक्षणानि यथा—'वातावरणं तासां सर्वासां प्रभावजनिकानामवस्थानां योगः कथ्यते यत्र जीवो वसति'[२]। 'तत्प्राकृतिकं सांस्कृतिकं च व्यवस्थापनं यत्र मानवस्य निवासः'[३]।

भारते प्रथमविश्वयुद्धस्यानन्तरं जीवविज्ञानान्तर्गतं पारस्थैतिकी-विज्ञानस्याध्ययनं प्रारभत। अस्य विज्ञानस्याध्ययनस्य मुख्यमुद्देश्यमासीत्— वनभूमिसंरक्षणम्, पशुसंरक्षणम्, नदीनां प्रदूषणराहित्यम्, अन्याः सामाजिक्यो गतिविधयश्च।

प्राचीनभारते पर्यावरणस्याध्ययनं विशेषतो नासीत्, आवश्यकताऽपि न काचिदनुभूयते स्म। यद्यपि भूगोलविज्ञानस्याध्ययनमासीदिति वाल्मीकीयरामायणस्य किष्किन्धाकाण्डे सुग्रीवेण भूगोलविषयकं यज्ज्ञानं वानरा विज्ञापितास्तेन विज्ञायते। किञ्च श्रीमद्भागवतादिपुराणेष्वपि खगोलविज्ञानस्य भूगोलविज्ञानस्य च भुवनकोषवर्णनसन्दर्भे विस्तरेण विवेचनमवलोक्यते[४]।

पुरा भारतीयानां जीवनशैल्यां पर्यावरणस्यानुकूलतां प्रति स्वाभाविकी सद्भावना आञ्जस्येन जागर्ति स्म। प्रकृतिं प्रति प्राचीनभारतीयकवीनां शास्त्रकाराणां महर्षीणां चाभिनिवेशः स्वत आसीत्, अत एव प्राचीनभारतीयवाङ्मये प्रकृतेर्वर्णनमथवा तदुल्लेखो बहुशो दृश्यते। किं बहुना, ओषधयो वनस्पतयो वृक्षा लता इत्यादयो देवताः कथिताः। अपि च पृथिव्या अन्तरिक्षस्य अपामाकाशादीनां च शान्तिः पर्यावरणशुद्धिदिशा प्राथिता। तथा च—

---

१. पी. हेगडे जियोग्रॉफी, ए माडर्न सिन्थेसिस (१९७५ ई.) पृ. ११।
२. ए.जी. टांसले—प्रैक्टिकल प्लाण्ट इकोलॉजी (१९२६ ई.)।
३. जे.पी. फिल्डिंग—जियोग्रॉफी एज सोशल साइन्स (१९७४ ई.) पृ. ३१९।
४. श्रीमद्भागवतपुराणम्, स्क. ५, अ. १६-२५।

'य ईङ्खयन्ति पर्वतान् तिरः समुद्रमर्णवम्।
मरुद्भिरग्न आ गहि'[१]।

'......नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय'[२]।

'द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सामा शान्तिरेधि'[३]। 'अक्रान्त्समुद्रः प्रथमे विधर्मं जनयन् प्रजा भुवनस्य गोपाः। वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः'[४]। 'नमो रुद्राय नमो अस्तु तक्मने नमो राज्ञे वरुणाय त्विषीमते। नमो दिवे नमः पृथिव्यै नम ओषधीभ्यः'[५]। '.....माता भूमिः पुत्रोऽहं पृथिव्याः पर्जन्यः पिता स उ नः पिपर्तु'[६]। 'येनावृतं श्वं दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च। यमन्तः समुद्रे कवयोऽवयन्ति यदक्षरे परमे प्रजाः'[७]।

प्रान्तच्छायाविनिर्मुक्ता न मनोज्ञा जलाशयाः।
यस्मादतो जलप्रान्तेष्वारामान् विनिवेशयेत्[८]॥

तस्य मध्ये सुपर्याप्तं कारयेद् गृहमात्मनः।
गुप्तं सर्वर्तुकं शुभ्रं जलवृक्षसमन्वितम्[९]॥

'खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन्।
सरित् समुद्रांश्च हरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्यः'[१०]॥

'पञ्चाम्रप्रोपी नरकं न याति इति विधानात्'[११]। इत्यादिना पर्यावरणस्यातिशयितं महत्त्वं ख्याप्यते।

पातञ्जले महाभाष्येऽपि पर्यावरणविज्ञानस्य तत्त्वानि सिद्धान्ताश्च बहुशः संक्षेपेण क्वचिद् विस्तरेण च निरूपिताः। 'केषां शब्दानाम्' इति प्रश्नस्योत्तरे सर्वप्रथमं पतञ्जलिना 'गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मणः' इत्युक्तम्[१२]। अत्र पतञ्जलिर्लौकिकशब्दानां परिगणनप्रसङ्गे गामेवोदाहरति। शब्दोऽयं लोके वेदे च सामान्येन प्रसिद्धः। अग्रे 'गौरित्यत्र कः शब्दः' इति जिज्ञासायाः समाधानावसरे यद् गोर्लक्षणं तेन प्रस्तुतं तत्तस्य पशुधनं प्रत्यभिरुचिं प्रदर्शयति। शकुनिशब्दः

१. ऋग्वेदः, १।१९।७;
२. शुक्लयजुर्वेदः, १६।४०।
३. तदेव-३६।१७;
४. सामवेदः, सोमसूक्तम्-७।
५. अथर्ववेदः, तक्मनसूक्तम्, २;
६. अथर्ववेदः-१२।१।१२।
७. नारायणोपनिषद्;
८. बृहत्संहिता, वृक्षायुर्वेदाध्यायः।
९. मनुस्मृतिः, ७।७६;
१०. श्रीमद्भागवतपुराणम्, ११।२।४१।
११. मन्वर्थमुक्तावली, ३।१६३;
१२. महाभाष्ये पस्पशाह्निकम्।

पक्षिवाचकः, एतेनेदं द्योत्यते यल्लौकिकजीवने पशुधनस्य पक्षिणाञ्च प्रचुरमहत्त्वमासीत्। पतञ्जलिना प्राय उदाहरणप्रदर्शनावसरे पशुधनस्योल्लेखः क्रियते। असन्देहार्थमध्येयं व्याकरणमित्यस्मिन् प्रसङ्गेऽपि—

'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति'[1] प्रस्तूयते।

शब्दानुशासनं केन विधिना कर्तव्यमित्यत्र महाभाष्यकृता यदुक्तं तेन पर्यावरणविज्ञानस्य तत्त्वं स्पष्टं भवति। आधुनिककाले मांसभक्षणस्य विशिष्टं प्रचलनं दृश्यते। आपणेषु कुक्कुटाः, कुक्कुटाण्डानि, अजादीनां मांसानि च प्रदूषितानि स्थाप्यन्ते विक्रीयन्ते च। कुक्कुटाण्डानां प्रजननाय विशेषतो रासायनिकौषधियुक्तः सूचीवेधः क्रियते। एतेषां प्रयोगेणोच्चरक्तचापः, हृदयरोगः, प्रमेहरोगश्च जायते। अत एवाधुनिकचिकित्साविदोऽपि मांसभक्षणाद् वारयन्ति जनान्। अत्र पतञ्जलेरुक्तिर्द्रष्टव्या—'पञ्च पञ्चनखा भक्ष्या इत्युक्तेर्गम्यत एतदतोऽन्येऽभक्ष्या इति। अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः। तद्यथा—'अभक्ष्यो ग्राम्यकुक्कुटः, अभक्ष्यो ग्राम्यसूकर इत्युक्ते गम्यत एतद्—आरण्यो भक्ष्य इति'[2]।

प्रस्तरयुगे नवप्रस्तरयुगे मानवस्याहारेषु जन्तूनां मांसमपि मुख्य आहार आसीत्। तदा हि जीविकाया अन्यानि संसाधनानि विकसितानि नासन्; परन्त्वधुना संसाधनानि प्रायः सर्वत्र देशेषु विकसितानि, अतो मांसभक्षणस्य नोपयुक्तता, तथापि यद्यावश्यकं चेत्तर्हि आरण्यकपशूनामेव मांसं भक्षणीयम्। यतो हि ग्राम्यस्य नागरस्य वा पशोः पक्षिणश्च प्रदूषितस्याशङ्का बलवती विद्यते, तेषामपशिष्ट-सामग्रीभक्षणात्। यद्यपि चिकित्साग्रन्थेषु मांसस्याण्डस्य वा वाजीकरणसन्दर्भे प्रयोगो लक्ष्यते, तथापि निवृत्तिस्तु महाफला भवत्येव।

महाभाष्यस्यैकेनोल्लेखेन ज्ञायते यत्पाञ्चालजनपदे पर्यावरणं निर्दुष्टमासीत्, तेन च तत्र अन्नानि, फलानि, जलानि च पर्याप्तमात्रायामुपलब्धानि—

'पञ्चाला जनपद इति। सुभिक्षः सम्पन्नपानीयो बहुमाल्यफल इति न सिध्यति। अथ विज्ञायते—जातेर्यानि विशेषणानीति सिद्धम्—सुभिक्षः सम्पन्नपानीयो बहुमाल्यफल इति। पञ्चाला जनपद इति न सिद्ध्यति'। अत्रैवाग्रे—'बदरी सूक्ष्मकण्टका मधुरा' इत्युल्लेखः[3]। तादृशी बदरी अधुना अत्यल्पमात्रायां क्वचिद् दृश्यते, प्रायः तस्या लोप एव जातः। यतो हि लघुवनान्यपि छिन्नानि जनैः, ग्रामस्य पार्श्वे लघुवने तस्या अनेके वृक्षा आसन्। महाभाष्यकारस्य महत्त्वपूर्णः सङ्केतो द्रष्टव्यः—'एको व्रीहिः सम्पन्नः सुभिक्षं करोति, एको यवः

---

१. महाभाष्ये पस्पशाह्निकम्; २. तदेव।
३. म.भा., पा.सू. १।२।५२।

सम्पन्नः सुभिक्षं करोति'[१]। यद्यप्यत्रैकस्य बहुत्वातिदेशः। सम्पन्नोऽर्थात् प्रदूषणरहितः, प्रदूषिते व्रीहौ यवे वा दुर्भिक्षं भवतीति तात्पर्यम्।

वृक्षान् प्रति पतञ्जलेरनुरागः कीदृश आसीदिति तस्य महाभाष्यावलोकनेन ज्ञायते यत्रोदाहरणान्तरसम्भवेऽपि तेन वृक्षाः, लताः, पशवः, पक्षिणः, नक्षत्राण्येव प्रस्तूयन्ते—'वृक्षश्च वृक्षश्च वृक्षौ। वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इति'। अत्रैव—'हरितस्य स्त्री हरिणी, हरिणस्यापि हरिणी, हरिणी च हरिणी च हरिण्यौ। श्येनस्य स्त्री श्येनी, श्येनस्यापि स्त्री श्येनी, श्येनी च श्येनी च श्येन्यौ। रोहितस्य स्त्री रोहिणी, रोहिणस्यापि रोहिणी, रोहिणी च रोहिणी च रोहिण्यौ'[२]।

एवं हि प्रतीयते यत्पतञ्जलेः परिवेशः सुरम्यैर्वृक्षैर्लताभिरोषधिभिः पशुभिः पक्षिभिर्व्याप्त आसीत्। अत एवोदाहरणप्रस्तुतौ भूरिशस्तेषामुल्लेखो जातः। आधुनिकयुगे पक्षिणां पशूनाञ्च संरक्षणाय शासनाधिकारिणः स्वायत्तसंस्थाश्च कृतप्रयत्ना दृश्यन्ते। यतो हि अनेके पक्षिणो लुप्तप्राया जाताः। गृध्रपक्षी भारते न कुत्राप्यधुना दृश्यते। यत्र तत्र श्वेतवर्णोऽल्पकायो गृध्रश्चावलोक्यते। चण्डीगढनगरे गृध्राणां संरक्षणाय एका शासकीया संस्थाऽपि विद्यते; किन्तु तत्रस्था अधिकारिणोऽपि न जानन्ति यद् गृध्रपक्षिणः किं भूताः, मृताः पलायिता वा।

साम्प्रतं हि गोवंशह्रासाद् दुग्धस्यापूर्त्यै रासायनिकं दुग्धं निर्मीयते राष्ट्रकण्टकैः, अपि च दुग्धे जलानि मिश्रयित्वा तद् विक्रीयते। सरूपसूत्रेऽपि भाष्यकृता गौरुल्लिख्यते—'न हि गौरित्युक्ते विशेषः प्रख्यायते—शुक्ला नीला कपिला कपोतिकेति'[३]। जातेर्विनाशो न भवतीत्यत्र महाभाष्यकार उदाहरणं प्रस्तौति—'वृक्षस्थोऽवतानो वृक्षे छिन्नेऽपि न विनश्यति'[४]। अत्र प्रदीपः—'यथा वृक्षस्योपरि . द्राक्षादिलतावतानः स्थितो न वृक्षविनाशमनु विनश्यति तथा जातिरपि'[५]। 'वृद्धो यूना.' इति सूत्रस्य व्याख्यानप्रसङ्गे 'अजश्च बर्करश्च अश्वश्च किशोरश्च उष्ट्रश्च करभश्चेति'[६] इत्युल्लेखः कृतः। यद्यपि करभकिशोरशब्दौ शावकवचनौ तथापि भाष्यप्रामाण्यात्तरुणवचनौ बोध्यौ, बर्करस्तरुणोऽजः[७]। 'स्त्रीपुंवच्च' इति सूत्रे 'अजा च बर्करश्च वडवा च किशोरश्च उष्ट्री च करभश्चेति'[८] इत्युक्तम्। एतेनेदं द्योत्यते यच्छास्त्रकारा मनुष्येतरप्राणिविषयेऽपि विचारवन्त आसन्। अत एव व्याकरणशास्त्रस्य दुरूहसूत्राणामर्थस्पष्टीकरणायापि त एवोद्ध्रियन्ते।

---

१. म.भा., पा.सू. १।२।५८;
२. तदेव-१।२।६४।
३. तदेव-१।२।६४;
४. तदेव-१।२।६४।
५. तदेव-१।२।६४;
६. तदेव-१।२।६५।
७. तदेव-१।२।६५;
८. तदेव-१।२।६६।

किञ्च, 'समाने रक्ते वर्णे गौर्लोहित इति भवति, अश्वः शोण इति। समाने च काले वर्णे गौः कृष्ण इति भवति, अश्वो हेम इति। समाने च शुक्ले वर्णे गौः श्वेत इति भवति, अश्वः कर्क इति'[१]। तात्पर्यमिदं विद्यते यन्महाभाष्यकृता यान्युदाहरणानि प्रस्तूयन्ते, तानि पर्यावरणस्य महत्त्वपूर्णघटकानि सन्ति, येषां ह्रासं दृष्ट्वा आधुनिकवैज्ञानिकाश्चिन्तिताः सन्ति। भूयो भूयस्तथाविधान्येवोदाहरणानि द्योतयन्ति यत्प्राचीनभारते वैयाकरणा अपि प्राकृतिकवातावरणेन सह एकीभूता आसन्। राष्ट्रेऽस्मिन् वैदिकयुगादेव पशुधनस्य महत्त्वं दृश्यते। अत एव देवाः पशुधनप्रदानाय भूरिशः प्रार्थ्यन्ते।

आध्यात्मिकजगति भौतिकजगत्यपि ध्वनेर्विशिष्टं महत्त्वं विद्यते। वैदिकानां समुचितारोहावरोहस्वरविशेषसमन्वितो ध्वनिरिष्टं साधयितुं सर्वथा क्षमोऽस्ति। गायनवादनध्वनयोऽपि मानवान् पशूँश्चापि प्रभावयन्ति। एवं श्रूयते यत्तानसेनस्य गायनं श्रुत्वा मेघोऽपि वर्षति स्म। मृगाः सुमधुरध्वनिं समाकर्ण्य उपसर्पन्ति स्म। वाराणस्यामपि एका किंवदन्ती श्रूयते यद् योगिराजेन विशुद्धानन्दस्वामिना कदाचिद् विशेषध्वनिना कतिचन पक्षिणः सम्मूर्छिताः पुनरपरध्वनिविशेषेण ते प्रबोधिताः। भारतीयपरम्परायामियं मान्यता विद्यते यन्मरणासन्नपुरुषस्य कर्णे ध्वनिविशेषस्य 'राम' इत्यस्य जपात्सद्गतिर्भवति। तात्पर्यमिदमस्ति यद् ध्वनेर्महत्त्वं पुराकाले यथाऽऽसीत्तथैवाद्यापि विद्यते। सम्प्रति ध्वनिप्रदूषणं विशेषरूपेणापन्नम्, येनानेके बाधिर्योच्चरक्तचापादयो रोगा जायन्ते। महानगरेषु वाहनानां, यन्त्रालयस्थयन्त्राणां जनानां च कोलाहलो विविधान् रोगान् जनयति।

विश्वस्मिन् मुम्बईदेहलीटोकियोन्यूयार्कादिनगरेषु ध्वनेस्तीव्रता शतडेसिमल-मात्रामतिक्रान्ता। सामान्यतया ५.६५ डेसिमलमात्रा शान्तध्वनेः, ६६.७५ डेसिमलमात्रा च साधारणध्वनेः स्वीक्रियते। ७५ डेसिमलमात्रातस्तीव्रध्वनिः कोलाहलत्वेन प्रोच्यते। चत्वारिंशदधिकशतडेसिमलमात्रामतिक्रान्तध्वन्यात्मके वातावरणे विद्यमाना जना उन्मादरोगग्रस्ता भवेयुः। वैज्ञानिकसर्वेक्षणदिशा साम्प्रतं मुम्बईनगरे ध्वनिप्रदूषणाद् दशप्रतिशतं मनुष्याः स्वीयं मन एकाग्रं कर्तुं न पारयन्ति, सप्तप्रतिशतमशान्तिमनुभवन्ति, षट्त्रिंशत्प्रतिशतञ्च चित्तावसादग्रस्ता व्याकुलाः सन्ति। इदं ध्वनिप्रदूषणं कोलाहलस्य न्यूनीकरणेनैवावरोद्धुं शक्यते।

सन्दर्भेऽस्मिन् पातञ्जलमहाभाष्ये विशेषरूपेण सङ्केतो विहितः। तथा च— कस्तर्हि शब्दः? इति प्रश्नस्य समाधाने 'येनोच्चारितेन सास्नालाङ्गूलककुदखुर-विषाणिनां सम्प्रत्ययो भवति स शब्दः। अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते। तद्यथा शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्ययं माणवक इति ध्वनिं

१. म.भा., पा.सू. १।२।७१।

कुर्वन्नेवमुच्यते। तस्माद् ध्वनिः शब्दः'[१]। अयमाशयः—शब्दो द्विविधः—स्फोटात्मको ध्वन्यात्मकश्च। तत्राद्यो नित्यः, द्वितीयश्च ध्वनिरूपोऽनित्यः। तत्रापि मन्दमुच्चार्यमाणं प्रति शब्दं कुर्विति विधिः, शेषयोर्द्वयोस्तीव्रोच्चारणेन ध्वनिप्रदूषणवारणधिया निषेधः ख्याप्यते। एवञ्च शब्दस्वरूपनिरूपणव्याजेन भगवता पर्यावरण-विज्ञानमप्युपस्थापितम्।

किञ्च व्याकरणाध्ययनस्यानुषङ्गिकप्रयोजनप्रसङ्गे—'तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः। तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः'[२] इत्युक्तम्। अत्र शब्दकर्मकाशुद्धोच्चारणेन पराभवरूपं फलं ध्वनिप्रदूषणं प्रकाशयति। एवमेव—

दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्[३]॥

अत्रानिष्टस्वरोच्चारणप्रयुक्तध्वनिप्रदूषणेनार्थान्तराभिधानाद् इन्द्र एव वृत्रस्य शातयिता सम्पन्नः। 'सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः।[४] अपि च 'एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति'[५]। इत्यादयो भाष्यकृन्निर्देशा द्योतयन्ति यच्छब्दानामुच्चारणमत्यन्तं सावधानतया करणीयम्, अन्यथा ध्वनेरशुद्धोच्चारणेन महाननर्थो जायेत। ध्वनिप्रदूषणं ध्वनेरसाधूच्चारणेन आवश्यकतापेक्षया तीव्रोच्चारणेन चोत्पद्यते। समस्येयमाधुनिकयुगे प्रधानरूपेणानुभूयते।

उन्मुक्तयौनाचारोऽपि साम्प्रतिकयुगस्य जन्यः। 'एड्स' इत्यभिधानोऽसाध्यो रोगोऽस्य पुरस्कारः, येन विश्वस्यानेकेषु देशेषु पुरुषाः स्त्रियो बालकाश्च प्रपीडिताः सन्ति। यौनाचारविषयेऽस्माकं धर्मशास्त्रेषु संयमस्योपदेशः प्रमुखतया कृतः। पातञ्जले महाभाष्ये विषयेऽस्मिन् य उल्लेखो विद्यते, सः सर्वथा अनुपालनीयतामञ्चति—

'खेदात्स्त्रीषु प्रवृत्तिर्भवति, समानश्च खेदविगमो गम्यायां चागम्यायाञ्च। तत्र नियमः क्रियते—इयं गम्येयमगम्येति'[६]। 'अत्रेन्द्रियनियमासामर्थ्यं खेदः। अथवा खेदयतीति खेदो रागः'[७]।

अपि च—'भक्ष्यं नाम क्षुत्प्रतिघातार्थमुपादीयते। शक्यञ्चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्। तत्र नियमः क्रियते—इदं भक्ष्यमिदमभक्ष्यमिति'[८]।

१. म.भा. पस्पशाह्निकम्; २. तदेव; ३. तदेव।
४. तदेव; ५. म.भा., पा.सू. ६।१।८४।
६. म.भा. पस्पशाह्निकम्; ७. तदेव; ८. तदेव।

अधुना उपभोक्तृवादसंस्कृतेः सर्वत्र प्रसारः। उपभोगस्य महत्त्वं गुणवत्तापेक्षया अधिकं विद्यते। उपभोक्तृसंस्कृतेः प्रभाविते समाजे उपभोगस्योत्कटलालसा विवेकं नाशयति, येन गम्यागम्यभक्ष्याभक्ष्यविचारशून्यो भवति जनः। तेन चाचारहीनत्वमायाति, आचारहीनत्वादेव विविधा मानसिकशारीरिकरोगाः समुत्पद्यन्ते। उपभोक्तृवादेनैव बहुधा पर्यावरणं प्रदूषितम्। शृङ्गारसामग्रीणां समुत्पादने वानरशशकमृगादीनां पशूनां चर्माणि, रक्तमङ्गानि च प्रयुज्यन्ते। गोर्वत्सानां सर्पाणाञ्च चर्मभिः 'पर्सू' (बटुआ) निर्मीयते। पातञ्जलमहाभाष्यस्यानयोक्त्योपभोक्तृवादसंस्कृतिं प्रति सुस्पष्टं निषेधो द्योत्यते।

निष्कर्षस्त्वयं विद्यते यद् यद्यपि महाभाष्यं शब्दशास्त्रस्य ग्रन्थोऽस्ति, तथापि प्राचीनभारतस्य परिस्थितिं पर्यावरणविज्ञानदृष्ट्या दर्शयति। पतञ्जलिना सूत्रवार्तिकानां व्याख्यानप्रसङ्गे उदाहरणरूपेण येषां वृक्षाणां, लतानां, गुल्मानाम्, ओषधीनां, पशूनां, पक्षिणां, जलचराणां, मेघानाम्, विद्युतः, आकाशस्य, अग्नेः, अन्तरिक्षस्य, आहुतेः, खाद्याखाद्ययोः, गम्यागम्ययोश्च य उल्लेखः कृतः, तस्य शब्दसाधुत्वदिशा तु उपयोगो विद्यत एव; किन्तु तत्रेदमपि विचारणीयं भवति यदेतेषामेवोदाहरणप्रदर्शने किमुद्देश्यमासीत्? स्मारं स्मारं गोः किं सन्दिशति पतञ्जलिः?

उपभोक्तृवादसंस्कृतौ तेषामुपर्युक्तानां महत्त्वं गौणं जातम्। यन्त्राश्रितो मनुष्यः शारीरिकश्रमशून्यो भूत्वा सुविधां भुनक्ति। परिणामतः सृष्टेरन्यैः प्राणिभिस्तस्य रागः सम्बन्धश्च विच्छिन्नः। संवेदनहीनो मानवः स्वगुम्फित एव जाले पतित्वा किंकर्तव्यविमूढः शारीरिकमानसिकावसादादिरोगैर्ग्रस्तो भवति। अस्मिन् लघुनिबन्धे महाभाष्यग्रन्थस्य संक्षेपेण विहङ्गावलोकनं पर्यावरणदृष्ट्या प्रस्तुतम्। विस्तृतरूपेणास्य ग्रन्थस्यानया दृष्ट्या मननमपेक्षितमस्ति। तथा सति भरतवाक्यमिदं सर्वथा सार्थकं स्यात्—

**क्षीरिण्यः सन्तु गावो भवतु वसुमती सर्वसम्पन्नसस्या**
**पर्जन्यः कालवर्षी सकलजनमनोनन्दिनो वान्तु वाताः।**
**मोदन्तां जन्मभाजः सततमभिमता ब्राह्मणाः सन्तु सन्तः**
**श्रीमन्तः पान्तु पृथ्वीं प्रशमितरिपवो धर्मनिष्ठाश्च भूपाः।।** इति।



# पाणिन्युपज्ञं कारकार्थविश्लेषणम्

**डॉ. रामचन्द्रद्विवेदी**
उपाचार्यः, व्याकरणविभागे
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी



"कारके"[१] इत्यधिकारसूत्रम्, अधिक्रियते उपरितनसूत्रजालशेषत्वेन पठ्यत इत्यधिकारः, कर्मणि घञ्, 'घञजबन्तात्पुंसि'[२] इति पुंस्त्वमित्यधिकारशब्दस्य स्वरूपम्, याथातथ्यं लक्षणन्त्वित्थम्—स्वदेशे लक्ष्यसंस्कारकबोधाजनकत्वे सति विधिसूत्रैकवाक्यतया बोधजनकत्वमधिकारत्वम्। अधिकारश्च त्रिप्रकारकः। इति 'षष्ठी स्थानेयोगा'[३] इति सूत्रे भाष्यकृतोपदिष्टम्—तत्राद्यः 'अधिकार एकदेशस्थः सर्वं शास्त्रमभिज्वलयति प्रदीपवत्' इति परिभाषारूपः। द्वितीयश्च—यथा रज्वा अयसा वा बद्धं काष्ठमनुकृष्यते, तद्वदनुकृष्यते चकारेण। तद्यथा—'सहस्य सः संज्ञायाम्'[४] इत्यविशेषेण 'ग्रन्थान्ताधिके च'[५], 'द्वितीये चानुपाख्ये'[६], 'अव्ययीभावे चाकाले'[७] इत्यादावनुकृष्यते। सहस्य सादेशश्चकारेणेति। तृतीयस्तु—प्रतियोगं तस्यानिर्देशार्थ इति योगे योगे उपतिष्ठते, 'स्वरितेनाधिकारः'[८] इति स्वरितत्व-प्रतिज्ञानादुत्तरेषु योगेषु तस्यानुमानं भवत्वित्यधिक्रियमाणस्यानुच्चारणार्थ इति यावत्।

अधिकारस्यान्येऽपि भेदाः शास्त्रानुसन्धानेनावसीयन्ते, तद्यथा—संज्ञा, विशेषणम्, स्थानी, प्रकृतिः, निमित्तम्, आदेश इति। तत्र 'प्रत्ययः'[९] (संज्ञात्वेन) 'शेषे'[१०] (विशेषणत्वेन) 'एकः पूर्वपरयोः'[११] (स्थानित्वेन) 'ङ्याप् प्रातिपदिकात्'[१२]

---

१. पा.सू. १।४।२३;
२. लिङ्गानुशासनम्, ३७, पुल्लिङ्गे।
३. पा.सू. १।४।४९;
४. तदेव-६।३।७८।
५. तदेव-६।३।७९;
६. तदेव-६।३।८०।
७. तदेव-६।३।८१;
८. तदेव-१।३।११।
९. तदेव-३।१।१;
१०. तदेव-४।१।९२।
११. तदेव-६।१।८४;
१२. तदेव-४।१।१।

(प्रकृतित्वेन) 'धातोः'[१] (निमित्तत्वेन) 'आर्धधातुके'[२] 'अपदान्तस्य मूर्धन्यः'[३] (आदेशत्वेन) इत्येतेऽधिकारत्वेनैवोपदिष्टा यथायथमूह्याः।

इह 'अपादानादिविधेयानिर्देशात् स्वरितत्वाधिकाराच्च कारक इति विशेषणमपादानसम्प्रदानादिविषयमधिक्रियते, नायमधिकारः संज्ञात्वेन भाव्यमानत्वात् संज्ञायाः सप्तम्यनुपपत्तेः। अथ च संज्ञानुसारं प्रथमानिर्देशः 'प्रत्ययः' इत्यादिवत् कथन्नेति चेदुच्यते? कारकसंशब्दनेषु भाव्यमाना-नामपादानादीनां ध्रुवादीनां नेयं संज्ञेति. अयन्तु सप्तम्या निर्दिष्टः 'कारके' इति निर्धारणे सप्तमी, निर्धारणञ्च बहुषु भवति, न त्वेकस्मिन्। अस्य सामान्यापेक्षया त्वेकवचनम्, अथवा 'छन्दोवत्सूत्राणि भवन्ति' इति धिया 'व्यत्ययो बहुलम्'[४] इति बहुवचने प्राप्त एकवचनम्—संज्ञाक्षेकारकेषु मध्ये अपाये यद्ध्रुवं तत्कारकं सद् अपादानसंज्ञकं भवति. अथवा अपाये यद् ध्रुवं कारकसंज्ञं भवति. अपादान-संज्ञञ्चेत्यर्थो लभ्यते। एवमेव कर्म-करण-सम्प्रदानाधिकरणेष्वप्यर्थसङ्गतिः कर्तव्या। एवं कारकापादानसंज्ञयोरेककालावच्छेदेन परस्परं निमित्तनिमित्तिभावाभावाद-कारकस्यापि व्यापाररहितस्य (शून्यस्य) अपादानसंज्ञा प्रसज्येत। अत एव विशेषणाधिकारोऽवसितः, तस्मिन् सति—कारकेषु मध्ये यदपाये ध्रुवमित्यर्थलाभः, तेन निर्धारणस्य सजातीयस्य विषयत्वाद् व्यापारशून्यस्यापादानसंज्ञा न भवति। अतो विशेषणानुरूप एव निर्देशः, न तु संज्ञानुरूपः। एतदेवोद्दिश्योक्तं भगवता भाष्यकृता—'न वापायस्याविवक्षिततत्वात्' इति।

ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति वाक्ये ब्राह्मणस्य कर्म-संज्ञाप्रसङ्गादकथितस्येति दोषनिरासाय कारक इति महती संज्ञा कृता। लघ्वर्थं हि संज्ञाकरणं, संज्ञा च नाम यतो न लघीय इति धिया महत्याः संज्ञायाः कारक इति करणमन्वर्थज्ञापनार्थम्। तच्च 'करोतीति कारकम्'[६]। अन्वर्थत्वात् कारकसंज्ञा व्यापारशून्यस्य न भवति। एवमर्थे कृते सति कारकशब्दस्य द्विधात्वमप्यायाति। कर्तृपर्यायः कारकशब्दो व्युत्पन्नो ण्वुल्प्रत्ययान्तः। संज्ञापर्यायस्त्वव्युत्पन्नो निमित्तवाचकः, यदि कर्तृपर्यायस्य कारकशब्दस्यात्र सूत्रे ग्रहणं स्यात्तदापादानादिषु कारकशब्दस्याप्रवृत्तिः, कर्तृकारकशब्दौ 'ण्वुल्तृचौ'[७] इति कर्तरि व्युत्पादितौ, कर्ता

---

१. पा.सू. ३।१।९१;
२. तदेव–६।४।४६।
३. तदेव–;
४. तदेव–३।१।८५।
५. म.भा. १।४।२३;
६. तदेव–१।४।२३।
७. पा.सू. ३।१।१३३।

च स्वतन्त्रः 'स्वतन्त्रः कर्ता'[१] इति सूत्रानुगमात्, अपादानादयोऽस्वतन्त्रास्तर्हि कथं तेषु व्यपदेश्यता स्यात्। कारकव्यपदेशाभावे कारकसंशब्दनेष्वपादानादीनां कारकेषु ग्रहणमेव न भवेत्। यदि च कर्हिचित् स्वतन्त्राभ्युपगम्येत्तर्हि तत्र कर्तृसंज्ञा प्रसज्येत, ततो हि ग्रामादायाति, ब्राह्मणाय गां ददातीत्यादौ कर्तृत्वात् 'कर्तृकरणयोस्तृतीया'[२] इति गोब्राह्मणयोस्तृतीया प्रसज्येत। इतरेतराश्रयाणि कार्याणि शास्त्रे न प्रकल्पन्ते, इति धिया इतरेतराश्रयतारूपो दोषोऽपि प्रसज्येत। कर्तृकारकयोर्निष्पत्तिः कर्त्रर्थ एव। यदि च कर्तृसंज्ञोत्तरं कारकव्युत्पत्तिः, तस्यामवस्थायां कारकशब्दोपक्रमेण कर्तृसंज्ञा इति चेदुच्यते—वह्निदं प्रतिविधेयं भवति, प्रतिविधाने च प्रतिपत्तिगौरवापत्तिः।

करोतीति कारकमिति भाष्योक्ता व्युत्पत्तिः, अत्र कृधातुना निष्पन्ना क्रिया धात्वर्थरूपा, न परिस्पन्दात्मिका, धातुना च सकलोऽधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणादयः फलावच्छेदेन एकीकृतो व्यापारोऽभिधीयते। तत्रैकस्यां मुख्यक्रियायामुपयोगो यथायथमवान्तरव्यापारमुखेन यथा—अपादानस्यावधिभावोपगमनं व्यापारः[३], सम्प्रदानस्य प्रेरणानुमत्यनिराकरणादिः[४], करणस्य काष्ठादेर्ज्वलनादिः[५], अधिकरणस्य सम्भवनधारणादिः[६], कर्मणो निर्वर्त्यविकार्यप्राप्त्यादिः[७], कर्तुः प्रयोजकप्रेषणादिः[८]। एतादृक्षु स्थलेषु कर्तृसंज्ञापरिहाराय निमित्तपर्यायस्याव्युत्पन्नस्य कारकशब्दस्य ग्रहणे दोषाभावः।

---

१. पा.सू. १।४।५४; २. तदेव–२।३।१८।

३. अवधिः पञ्चम्यर्थः, वैयाकरणभूषणसारः, नामार्थनिर्णयः। अपायविषयं ध्रौव्यं यत्तु व्यवस्थितम्। (वा.प.३।७।१३८)

४. अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम्। प्रेरणानुमतिभ्यां लभते सम्प्रदानताम्।। (वा.प. ३।७।१२९)

५. क्रियायाः परिनिष्पत्तिर्यद् व्यापारादनन्तरम्।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम्।। (वा.प. ३।७।९०)
एधाः पक्ष्यन्त्याविक्लित्तेर्ज्वलिष्यन्तीति ज्वलनक्रियाकरणस्य पाकः। (म.भा. १।४।२३)

६. द्रोणं पचत्याढकं पचतीति सम्भवनक्रिया धारणक्रिया चाधिकरणस्य। (म.भा. १।४।२३)
कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्।
उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्।। (वा.प. ३।७।१४८)

७. निर्वर्त्यं च विकार्यं च प्राप्यञ्चेति त्रिधा मतम्।
तत्रेप्सिततमं कर्म चतुर्धाऽन्यत्तु कल्पितम्।। (वा.प. ३।७।४५)

८. प्रेषणाध्येषणे कुर्वंस्तत्समर्थानि चाचरन्।
कर्तैव विहितां शास्त्रे हेतुसंज्ञां प्रचक्षते।। (वा.प. ३।७।१२५)

एवं सति 'ग्रामादायाति' इत्यत्र ग्रामस्य ध्रुवस्यागमनक्रियां प्रति निमित्तभावोऽस्ति, यदीह ग्रामोऽवधित्वेन नोपतिष्ठेत्तर्हि आगमनं न प्रतिपद्येत, तस्मान्निमित्तत्वेन ग्रामः कारकम्। कारकशब्दश्च क्रियाहेतावेव ख्यातः, अनाश्रित-व्यापारं निमित्तं हेतुः, आश्रितव्यापारं कारकम्, उक्तञ्च भर्तृहरिणा, तद्यथा—

द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्।
कर्ता कर्त्रन्तरापेक्षः क्रियायां हेतुरिष्यते[१]।। इति।

सामान्यशब्दादयोऽप्यर्थप्रकरणादिना विशेषवृत्तिमुपगच्छन्ति।

वृक्षस्य पर्णं पततीत्यत्र वृक्षो नावधित्वेनाभिप्रेतः, प्रत्युत सम्बन्धित्वेन, विवक्षितावधिभावस्यैव वृक्षस्य सम्बन्धित्वेन विवक्षितत्वात्। भाष्येऽप्युक्तम्—'न वापायस्याविवक्षितत्वात्'[२]। अपायस्य कारकग्रहणान्निमित्तत्वेनाविवक्षितत्वादपादान-संज्ञाया अप्रवृत्तिः। अवधिभूतस्य वृक्षस्य पर्णमित्यर्थावगमात्, सम्बन्धित्वेन विवक्षाऽवधिभावस्य विवक्षया न विरुध्यते, ध्रुवन्तु तदेव यदवधिभूतमपाये साध्ये—'अपाये साध्ये यदवधिभूतम्' इत्युक्तं भूषणसारेऽपि, तद्यथा—

अपाये यदुदासीनं चलं वा यदि वाचलम्।
ध्रुवमतदावेशात् तदपादानमुच्यते[३]।। (भूषणसारे)

ध्रुवमवधिरपायोऽपि समवेतस्तथा ध्रुवे[४]।
द्रव्यत्वभावो न ध्रौव्यमिति सूत्रे प्रतीयते।
अपायविषयं ध्रौव्यं यत्तु तावद्विवक्षितम्[५]।। इति।

तस्माद्विवक्षितावधिभावस्यैव वृक्षस्य सम्बन्धित्वमात्रं विवक्षितम्, न विद्यमानस्यायं प्रतिनिमित्तत्वमिति काऽत्रायुक्तता।

इत्थमपादानस्य त्रिधात्वमप्यायाति, तद्यथा—

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा।
अपेक्षितक्रियञ्चेति त्रिधापादानमुच्यते[६]।। इति।

यत्र धातुना साक्षाद् गतिर्निर्दिश्यते तन्निर्दिष्टविषयम्, यथा—अश्वात्

---

१. वा.प. ३।७।२५; २. म.भा. १।४।२३।
३. इयं कारिका भूषणसारे हरिणोक्ता निर्दिष्टा; परन्तु वाक्यपदीये नोपलभ्यते।
४. वा.प. ३।७।१३७ कारिकार्धभागः; ५. तदेव-३।७।१३८।
६. तदेव-३।७।१३६।

पतति। यत्र धात्वर्थान्तराङ्गं स्वार्थं धातुराह, तदुपात्तविषयम्, यथा—बलाहकाद्विद्योतते विद्युत्। अपेक्षिता क्रिया यत्र तदपेक्षितक्रियम्—यथा कुतो भवान्? पाटलिपुत्रादिति।

यत्तूक्तं ब्राह्मणस्य पुत्रं पन्थानं पृच्छति तदिह विमृश्यते, 'अकथितञ्च'[1] इत्यकथितस्य विधीयमाना कर्मसंज्ञा 'कारके'[2] इत्यस्याभावे ब्राह्मणस्यापि कर्मसंज्ञा प्रसज्येत। उक्तञ्च भाष्यकृता—

'कर्मसंज्ञाप्रसङ्गोऽकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति'[3] इति वार्तिकोपन्यासे अकथितशब्दोऽसङ्कीर्तिते वर्तते, असङ्कीर्तित इत्यस्याकीर्तित इत्याशयः। स च कस्यचिद्विशेषस्याप्रकृतत्वाद् विशेषानुपादाने सति प्रयुज्यमानः सर्वत्राकीर्तितमात्रे भवेत्। अकथितमित्यनेन सर्वं कारकञ्चाकारकञ्च अकथितमित्यवसीयते। यथात्र पिताऽपादानादिभिर्विशेषैर्न कथितस्तथैव माणवकोऽपि, अतस्तस्यापि माणवकस्य कर्मसंज्ञा प्रसज्येत। 'कारके'[4] इति सति तु प्रश्नक्रियानिमित्तस्य पितुरेव कर्मसंज्ञा, न तु माणवकस्य। अत्र पितुः सम्बन्धित्वेन माणवको विवक्षितः, न तु प्रश्नक्रियां प्रति निमित्तभावेनोपलक्षितः। किन्तर्हि सम्बन्धित्वेनेति।

यदि च 'कारके' ध्रुवादीनां विशेषणमिदमित्यवसीयते, न संज्ञेति, तदा 'कारकाद्दत्तश्रुतयोरेवाशिषि' इत्यादिषु स्थलेषु कारकशब्दः संशब्द्यते, तदा तत्रापादानादीनां वक्ष्यमाणानां षण्णामेव ग्रहणमिष्यते, तन्न सेत्स्यति। संज्ञापक्षे तु दोषाभावः, संज्ञा ह्यावर्तमाना संज्ञिनं प्रत्याययति, उक्तञ्च भाष्यकृता—

'कारक इति संज्ञानिर्देशश्चेत्संज्ञिनो निर्देशः कर्तव्यः'[5]।

प्रदेशान्तरेऽपि कारकशब्दस्य निमित्तपर्यायतयोपादानम्। तच्च निमित्तमपादानाद्येव, न हिं ततोऽन्या क्रिया निमित्तं भवति। एतावता कारकग्रहणेन अपादानादीनामेव ग्रहणम्।

भाष्यकारस्तु—'एकद्रव्यसमवायित्वात्' इत्युपदिश्योक्तम्—यथा 'गार्ग्यो देवदत्तः' इत्युक्ते न हि गार्ग्य इत्यनेन देवदत्तत्वं देवदत्त इत्युक्ते गार्ग्यत्वमुक्तं भवति। उभौ चान्योऽन्यविशेषकौ भवतः, एकद्रव्यसमवायित्वात्[6]।

---

१. पा.सू. १।४।५१; २. तदेव–१।४।२३।
३. म.भा. १।४।२३; ४. पा.सू. १।४।२३।
५. म.भा. १।४।२३; ६. तदेव–१।४।२३।

अयं भाव:—सर्वेषां कारकाणां साध्यत्वेन साधारणी क्रिया, ततश्च सर्वेषां कारकाणां क्रियां प्रति कर्तृत्वम्, अवान्तरविवक्षायान्तु करणादिरूपत्वम्। तथा मातापित्रोरपत्योत्पादने कर्तृत्वम्, भेदविवक्षायां त्वयमस्यामियमस्मिञ्जनयतीत्यधिकरणत्वमपादानत्वञ्चोपतिष्ठते। यत्र च शक्तीनां निमित्तनिमित्तिभावेनैककालावच्छेदेन विवक्षा तत्र संज्ञानां विप्रतिषेध आश्रीयते, यथा 'धनुषा विध्यति' इत्यादौ विनाऽप्यपायविवक्षया धनुषः साधकतमत्वाभावात् संज्ञाद्वयोपस्थितौ परत्वात् करणसंज्ञैवेति। कारकापादानादौ सामान्यभूता क्रिया, तस्या निवर्तकं कारकमिति भाष्याभिप्रेतोऽर्थः। केचन तु साहचर्यात् कारविशेषणसहचरिता अपादानादयः कारकशब्देन व्यपदिश्यन्त इति तद्ग्रहणेनैव तेषां ग्रहणमित्यभिलषन्ति।

भाष्यकारस्त्ववसाने—'अथवा यावद् ब्रूयात् 'क्रियायामिति' तावत् 'कारके' इति। एवञ्च कृत्वा निर्देश उपपन्नो भवति। 'कारके' इति। इतरथा हि कारकेष्विति ब्रूयात्'[१]।

कारकग्रहणं वा स्वरयितव्यम्, अतः 'स्वरितेनाधिकारः'[२] इत्येष विधिर्भवति। तस्मात् कारकग्रहणेनापादानादीनां ग्रहणं भविष्यतीति शम्।



१. म.भा. १।४।२३।
२. पा.सू. १।३।११।

# बाधबीजानुशीलनम्

**डॉ० वृजकिशोरत्रिपाठी**
प्रवक्ता, संस्कृतस्य
राजकीयस्नातकोत्तरमहाविद्यालयः
फतेहपुरम्, आलापुरम्, अम्बेडकरनगरम् (उ.प्र.)



ऐन्द्रचान्द्रकाशकृत्स्नादिव्याकरणेषु रत्नायमानं पाणिनीयमेव व्याकरणं समुपलभ्यत इदानीम्। संस्कृतवाङ्मयस्यानुपमरत्नमिदं व्याकरणमित्यत्र नास्ति मनागपि संशीतिः। पूर्वोक्तेषु व्याकरणेषु समग्रस्य शब्दराशेः व्युत्पत्तिसामर्थ्यमदृष्ट्वा पाणिनिमुनिर्लौकिकवैदिकोभयविधप्रयोगसाधनार्थं महेश्वरप्रसादाप्तौजा व्याकरणमिदं विरचितवान्।

पाणिनेः व्याकरणस्य आदितः सम्पूर्तिं यावत् परस्परामाबद्धां ग्रन्थ-शैलीमालोच्य प्राच्याः पाश्चात्त्याश्च विद्वांस आश्चर्यान्विता भवन्ति। महाभाष्यकारेण पतञ्जलिनाप्यस्य गाम्भीर्यगुम्फनमाकलय्योक्तम्—**'प्रमाणभूत आचार्यो दर्भ-पवित्रपाणिः शुचावकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण'**[१] इति।

पुनश्च ब्रवीति—**'सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्'**[२] इति।

किञ्च, भिन्नानुबन्धकरणमपि पाणिनेः कस्यचनार्थस्य ज्ञापकम्; का कथा पुनः सूत्राणाम्? महतोऽस्य शब्दराशेः सुपरिज्ञानाय पाणिनिना षड्विधानि सूत्राणि विरचितानि। यथोक्तम्—

संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्[३]॥

---

१. महाभाष्यम्, १।१।आ. ३, सू. १।

२. म.भा., ६।१ आ. ३, सू. ७७।

३. ल.श.शे., अभिनवचन्द्रिकाटीका, संज्ञाप्रकरणम्।

विधिशास्त्रोपकारीण्यन्यान्यपि संज्ञादीनि सूत्राणि। तत्र साक्षाल्लक्ष्यसंस्कारकसाधुत्वप्रकारकबोधजनकत्वं विधिसूत्रस्य लक्षणमुक्तम्। इदञ्च विधिसूत्रं द्विविधं द्रष्टव्यम् उत्सर्गापवादाभ्याम्। महाभाष्यकारः पतञ्जलिरप्याह— 'कथं तर्हीमे शब्दाः प्रतिपत्तव्याः? किञ्चित्सामान्यविशेषवल्लक्षणं प्रवर्त्यम्। येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्। किं पुनस्तत्? उत्सर्गापवादौ। कश्चिदुत्सर्गः कर्त्तव्यः कश्चिदपवादः। कथञ्जातीयकः पुनरुत्सर्गः कर्तव्यः, कथञ्जातीयकोऽपवादः? सामान्येनोत्सर्गः कर्त्तव्यः। तद्यथा—'कर्मण्यण्'[1]। तस्य विशेषेणापवादः। तद्यथा—'[2]आतोऽनुपसर्गे कः'[3]। इति।

सामान्यरूपेण कस्यचन कार्यस्य विधायकं सूत्रमुत्सर्गसूत्रं कथ्यते। यथोक्तम्—'कर्मण्यण्'। विशेषरूपेण तत्कार्यस्य विधायकं सूत्रमपवादसूत्रमुच्यते। यथा—'आतोऽनुपसर्गे कः' इति सूत्रम्। सूत्रमिदं कर्मवाचकपद उपपदे सति उपसर्गरहितादादन्ताद्धातोः कप्रत्ययं कर्त्रर्थे विदधाति। 'कर्मण्यण्'-सूत्रन्तु कर्मवाचक उपपदे सति धातोरण्प्रत्ययं कर्त्तरि विदधाति। तदीयोद्देश्यतावच्छेदको धर्मः कर्मवाचकोपपदधातुवृत्तिधातुत्वम्। 'आतोऽनुपसर्गे कः' इत्यस्योद्देश्यतावच्छेदको धर्मः कर्मवाचकानुपसृष्टादन्तधातुत्वम्। एष च धर्मो व्याप्यः। 'कर्मण्यण्' इत्यस्योद्देश्यतावच्छेदको धर्मः कर्मवाचकोपपदधातु-वृत्तिधातुत्वम्। एष च 'आतोऽनुपर्गे कः' एतदीयोद्देश्यतावच्छेदकव्यापकः। यतश्च यत्र यत्र कर्मवाचकोपपदानुपसृष्टादन्तधातुवृत्तिधातुत्वम्, तत्र तत्र कर्मवाचकोपपदधातुवृत्तिधातुत्वं वर्तत एव। अत एव व्याप्यधर्मावच्छिन्नातिरिक्तत्वेन व्यापकधर्मावच्छिन्ने = उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो भवतीति सिद्धान्तः पर्यवसन्न उत्सर्गापवादयोः शास्त्रयोः। तेन 'गोदः' 'कम्बलदः' इत्यादौ न 'कर्मण्यण्' इति सूत्रप्रवृत्तिः।

अतः परमुत्सर्गापवादशास्त्रयोः स्वरूपज्ञानाय प्रयतिष्ये। स्वरूपज्ञानानन्तरं येन सह यस्य सम्बन्धो निरूप्यनिरूपकभावः सम्भविष्यति, तेन सह तस्योत्सर्गापवादौ निश्चेतुं शक्येत एव।

### सामान्यधर्मावच्छिन्नोद्देश्यताकशास्त्रस्य बाध्यत्वे बीजम्

विशेषशास्त्रीयोद्देश्यो यो विशेषधर्मावच्छिन्नस्तद्वृत्तिर्यः सामान्यधर्मस्तद-वच्छिन्नोद्देश्यताकशास्त्रस्य विशेषशास्त्रेण = विशेषधर्मावच्छिन्नोद्देश्यताकशास्त्रेण बाधो भवति। सामान्यधर्मो नाम व्यापको धर्मः, विशेषधर्मो नाम व्याप्यो धर्मः।

---

१. पा.सू. ३।२।१;	२. पा.सू. ३।२।३।

३. महाभाष्यम्, पस्पशाह्निकम्।

ननु सामान्यधर्मे विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तिविशेषणं व्यर्थम्, सामान्यधर्मे विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नावृत्तित्वे तस्य सामान्यत्वासम्भवादिति चेत्सत्यम्, उद्देश्यतावच्छेदकावच्छेदकसम्बन्ध एव व्यापकतावच्छेदको ग्राह्य इति भ्रमवारणायैवात्रोक्तविशेषणस्य सार्थक्यात्। अन्यथा 'एकाचो द्वे प्रथमस्य'[१], 'अजादेर्द्वितीयस्य'[२] इति सूत्रयोर्व्याप्यव्यापकभावाभावेन बाध्यबाधकभावो न भवेत्, तथा हि, 'अजादेर्द्वितीयस्ये'ति व्याप्यसूत्रस्योद्देश्यतावच्छेदको धर्मो द्वितीयैकाच्त्वम्, स च स्वरूपसम्बन्धेन यत्र वर्तते, तत्र स्वरूपसम्बन्धेन धात्ववयवप्रथमैकाच्त्वं व्यापकशास्त्रीयोद्देश्यतावच्छेदकं नास्ति, अतः सामानाधिकरण्याभावेन व्याप्यव्यापकभावाद् बाध्यबाधकभावो न भवेदित्यर्थः। गृहीते तु तस्मिन् विशेषणे येन केनापि सम्बन्धेन सामानाधिकरण्येऽपि व्याप्यव्यापकभावे, 'अजादेर्द्वितीयस्ये'ति व्याप्यशास्त्रीयोद्देश्यतावच्छेदकं द्वितीयैकाच्त्वं स्वरूपेण सम्बन्धेन यत्र वर्तते, तत्र 'एकाचो द्वे प्रथमस्यो'द्देश्यतावच्छेदकं धात्ववयवप्रथमैकाच्त्वं स्वघटकाच्त्ववदुत्तरत्वसम्बन्धेन द्वितीयैकाचि वर्तते। अतो द्वयोर्धर्मयोरेकत्र वर्तमानतया व्याप्यव्यापकभावेन बाध्यबाधकभावः सिद्ध्यति।

अत्र पुनराशङ्कते—ननु साक्षादुद्देश्यतावच्छेदकयोर्व्याप्यव्यापकभावोऽपेक्ष्यतेऽत्र बाधनार्थम्, उत साक्षात्परम्परासाधारणोद्देश्यतावच्छेदकयोः। नाद्यः, 'नेमौ रहौ कार्यिणौ किन्तर्हि निमित्तम्'[३] इति भाष्यविरोधापत्तेः। तत्र हि, 'अचो रहाभ्यां द्वे'[४] इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकतावच्छेदकस्य रत्वस्य 'अनचि च'[५] इति शास्त्रीयोद्देश्यतावच्छेदकयर्त्वापेक्षया व्याप्यत्वेन अपवादत्वात् तद्बाधेन रेफस्य द्वित्वाभावः सिद्ध्यति। अस्यायं स्फुटाभिप्रायः—यदि साक्षादुद्देश्यतावच्छेदकयोरेव विशेषसामान्यशास्त्रयोर्व्याप्यव्यापकभावोऽपेक्ष्यते, तदा 'हर्य्यनुभवः' इति प्रयोगे प्राप्तं द्वित्वं वारयितुं 'नेमौ रहौ कार्यिणौ किन्तर्हि निमित्तमि'ति भाष्यं न सङ्गच्छेत। तथा हि, 'हर्य्यनुभवः' इत्यत्र 'अनचि च' इति सूत्रेण रकारस्य अजव्यवहितपूर्वत्वाभावविशिष्टाजव्यवहितोत्तरयर्त्वाद् द्वित्वं प्राप्यते। तं प्रबाध्य 'अचो रहाभ्यां द्वे' इति सूत्रेणात्र द्वित्वप्रसक्तिः। ननु 'हर्य्यनुभवः' इत्यत्र यथा 'अनचि चे'ति सूत्रस्य रकारे साक्षादुद्देश्यतावच्छेदकस्य यर्त्वस्य सत्त्वात्प्राप्तिर्द्वित्वस्य तथा 'अचो रहाभ्यां द्वे' इति सूत्रस्य साक्षादुद्देश्यतावच्छेदकता नास्ति रकारे, तस्या अजव्यवहितोत्तररकारहकाराव्यवहितोत्तरे यर्य्येव सत्त्वादिति

---

१. पा.सू. ६।१।१; २. पा.सू. ६।१।२।

३. महाभाष्यम्, हयवरट्सूत्रस्थं, द्वितीयांह्निकम्।

४. पा.सू. ८।४।४६; ५. पा.सू. ८।४।४७।

चेत्, न, प्रसङ्गेऽस्मिन् परम्परयाप्युद्देश्यतावच्छेदकस्य ग्रहणात्। तथा च सति 'अचो रहाभ्यां द्वे' इति सूत्रस्य यद्यपि साक्षादुद्देश्यतावच्छेदकता तादृशे यरि, तथापि परम्परयोद्देश्यतावच्छेदकता अर्थादुद्देश्यतावच्छेदकतावच्छेदकता रकारेऽपि विद्यते। रकारस्य च यत्वापेक्षया व्याप्यत्वाद् विशेषः, तेन चास्य 'अनचि चे'ति सूत्रस्य बाधकत्वम्। एवञ्च रकारस्य 'अचो रहाभ्यां द्वे' इति सूत्रप्राप्तद्वित्वबाधनाय उपर्युक्ता भाष्योक्तिः सङ्गच्छते। यदि साक्षादुद्देश्यतावच्छेदकधर्मयोर्व्याप्यव्यापकभावो बाधप्रयोजकस्तदा प्रकृते 'अचो रहाभ्यामि'त्यस्य साक्षादुद्देश्यतावच्छेदकत्वाभावात्तस्य कथं प्राप्तिः। तदभावे कथं व्याप्यव्यापकभावचर्चा। तदभावे कथं बाध्यबाधकभावः। कथञ्चानचि चेति सूत्रस्य बाध्यत्वाभावे 'अचो रहाभ्यामि'ति सूत्रप्राप्तिस्तदपहाराय भाष्योक्त्यावश्यकता।

नापरः, अनुशतकादिषु[1] पुष्करसच्छब्दपाठसामर्थ्येन आदिवृद्धिरन्त्योपधावृद्धी बाधते, इत्यर्थज्ञापकपरभाष्यविरोधापत्तेः। परम्परयोद्देश्यतावच्छेदकयोर्ञ्णित्प्रत्ययत्वञ्णित्तद्धितयोर्व्याप्यव्यापकभावेन 'तद्धितेष्वचामि'[2]ति शास्त्रेण 'अचो ञ्णिति'[3], 'अत[4] उपधाया' इत्यनयोर्बाधादेवोक्तार्थसिद्धेर्निरुक्तभाष्यविरोधः स्पष्टः। अस्येयं स्पष्टता—'अचो ञ्णिति', 'अत उपधायाः' इति सूत्रद्वयं ञ्णितिप्रत्यये पर एव प्रवर्तेते। 'तद्धितेष्वचामादेरि'ति च ञ्णिति तद्धिते परे प्रवर्तते। अतः 'तद्धितेष्वचामादेरि'ति सूत्रस्य तद्धितप्रत्ययमात्रविषयत्वाद् व्याप्यविषयता, तथा व्याप्यत्वन्तस्य पूर्वोक्तसूत्रद्वयापेक्षया; किन्त्वेषां सूत्राणामुद्देश्यतावच्छेदकत्वमेकन्नास्ति, अतो व्याप्यव्यापकभावो नास्ति। तदभावे 'तद्धितेष्वचामादे'रादिवृद्धेर्बाधनाय भाष्यकारवचनं सङ्गच्छते। इदानीमिह परम्परयोद्देश्यतावच्छेदकयोर्व्याप्यव्यापकभावस्वीकारे पूर्वोक्तवद् आद्यच्, उपधाभूतेऽकारे अङ्गान्तनिष्ठाचि च वर्तते, तद् व्याप्यव्यापकभावो निराबाधः। तेन चादिवृद्ध्यन्तोपधावृद्धी बाधत इति किमर्थं भाष्यवचनमिति विरोधः।

अत्रोच्यते-व्याप्यव्यापकधर्मयोः साक्षात्परम्परया वा तत्तदुद्देश्यतावच्छेदकयोर्विशेषणदलप्रविष्टयावत्पदार्थसङ्कुचितयोरेव ग्रहणेन, 'तद्धितेष्वचामादेरि'ति शास्त्रीयतादृशोद्देश्यतावच्छेदकस्य अज्घटिताङ्गावधिकपरत्वविशिष्टञ्णित्तद्धितत्वस्य; अदुपधावधिकपरत्वविशिष्टञितिणित्प्रत्ययत्वस्य, अजन्ताङ्गावधिकपरत्वविशिष्टञितिणित्प्रत्ययत्वरूपस्य चेत्युभयशास्त्रीयोद्देश्यतावच्छेदकाभाववति, मारुच्छब्दघटकतद्धिते, वर्तमानत्वेन, तस्य व्याप्यत्वाभावादनेन न्यायेन आदिवृद्धेरन्त्योपधावृद्धिबाधनासम्भवेनोक्तज्ञापकपरभाष्यविरोधाभावात्।

१. पा.सू. ७।३।२०; २. पा.सू. ७।२।११७।
३. पा.सू. ७।२।११५; ४. पा.सू. ७।२।११६।

'अचो रहाभ्यामि'त्यत्राजव्यवहितपरत्वयरव्यवहितपूर्वत्वधर्माभ्यां सङ्कुचितस्य रत्वस्य अजव्यवहितपूर्वत्वाभावरूपधर्मसङ्कुचितस्य 'अनचि चे'ति शास्त्रस्योद्देश्यतावच्छेदकयत्वस्यापेक्षया व्याप्यत्वेन 'नेमौ रहावि'ति भाष्यसङ्गतिश्च। उभयत्र परम्परयोद्देश्यतावच्छेदकत्वं गृह्यते। इत्थञ्च साक्षात्परम्परा-साधरणोद्देश्यतावच्छेदकयोः सामान्यविशेषशास्त्रयोर्बाध्यबाधकभावः स्थापित इति ध्येयम्।

यद्वा, अत्रोद्देश्यतापदेन उद्देश्यदलप्रविष्टशाब्दबोधीयविषयत्वमात्रं गृह्यते, तच्च सङ्कुचितमेवास्तीति, न विशेष्यविशेषणदलप्रविष्टयावत्पदार्थसङ्कुचितमिति निवेशस्योपयोगः।

इत्थञ्च प्रकारद्वयेऽपि 'यावत्पदार्थसङ्कुचितः' इति प्रकारे, 'यद्वा' प्रकारे च; सामान्यविशेषशास्त्रयोर्बाध्यबाधकत्वनियमस्वरूपकथने आदौ वृत्त्यन्तविशेषणदानं निष्फलमेव। नन्वेवं वृत्त्यन्तविशेषणाभावे 'एकाचो द्वे प्रथमस्ये'ति सामान्यशास्त्रस्य 'अजादेर्द्वितीयस्ये'ति विशेषशास्त्रेण कथं बाध इति चेत्, न, 'एकाच्' इति शास्त्रीयोद्देश्यतावच्छेदकधातुत्वस्य, तादृशधातुत्वावच्छिन्नविषयतायाश्च; 'अजादेरि'ति शास्त्रीयोद्देश्यतावच्छेदकस्य, तादृशधातुत्वावच्छिन्नविषयतायाश्चापेक्षया व्यापकत्वेन तद्बाधसिद्धेः।

अत्र च विषयतयोर्व्याप्यव्यापकभावस्तद्विषयतामात्रवृत्तितद्व्यक्तित्वादिनैव इति नाग्रहः, किन्त्वन्यतरत्वादिनापि। अत एव 'इको यणची'[१]त्येतच्छास्त्रीयेक्पद-प्रयोज्यविषयतायाः 'दैत्यारिः' इत्यत्रासत्त्वेन 'आद्गुणः'[२] इत्येतच्छास्त्रीयापद-प्रयोज्यविषयतायाश्च 'श्रीशः' इत्यत्रासत्त्वेन प्रत्येकवृत्तिधर्मपुरस्कारेण तयोर्व्यापकत्वविरहेऽपि अन्यतरत्वेन तयोर्विषयतयोर्व्यापकत्वमादाय 'अकः[३] सवर्णे दीर्घः' इत्यनेन 'इको यणचि', 'आद्गुणः' इत्येतयोर्द्वयोरपि बाधः सिद्ध्यति। 'दैत्यारिः' इत्यत्र 'इको यणचि' इति सूत्रस्य यद्यपि विषयता नास्ति, तथापि 'आद्गुणः' इत्यस्य त्वस्त्येव। एवमेव 'श्रीशः' इत्यत्र 'आद्गुणः' इत्यस्य विषयत्वाभावेऽपि 'इको यणची'ति शास्त्रीयविषयतायाः सत्त्वेनान्यतरत्वमादाय व्याप्यव्यापकभावोऽस्तीति स्मर्तव्यम्।

नन्वेवं 'कुप्वोः[४] ✕क ✕पौ च' इति शास्त्रेण 'विसर्जनीयस्य[५] सः', 'शर्परे विसर्जनीयः'[६] इत्येतच्छास्त्रीयविसर्जनीयपदप्रयोज्यविषयताद्वयस्यापि अन्यतरत्वेन

---

१. पा.सू. ६।१।७७; २. पा.सू. ६।१।८७।
३. पा.सू. ६।१।१०१; ४. पा.सू. ८।३।३७।
५. पा.सू. ८।३।३४; ६. पा.सू. ८।३।३५।

स्वघटकविसर्जनीयपदप्रयोज्यविषयताव्यापकत्वेन तयोर्द्वयोरपि बाधापत्तिः। न च स्वव्यापकतावच्छेदकत्वस्वव्यापकतावच्छेदकाव्यापकत्वोभयसम्बन्धेन स्वघटकपद-प्रयोज्यविषयताविशिष्टधर्मावच्छिन्नव्यापकतावद्विषयताकशास्त्रस्य स्वेन बाध इत्यर्थ-कल्पनेन निरुक्तविषयताद्वयवृत्त्यन्यतरत्वे 'कुप्वोरि'ति-शास्त्रीयविसर्जनीय-पदप्रयोज्यविषयताया आद्यसम्बन्धेन वैशिष्ट्येऽपि, स्वव्यापकतावच्छेदक-'विसर्जनीयस्य सः' इत्येतच्छास्त्रीयविसर्जनीयपदप्रयोज्यविषयतावृत्तितद्-व्यक्तित्वव्यापकत्वेन, द्वितीयसम्बन्धेन तदभावाद् बाध्यत्वप्रयोजकोक्तरूपाभावेन नोक्तशास्त्रद्वयबाधः।

अस्येदं स्फुरणम्—स्वव्यापकतावच्छेदकत्व-स्वव्यापकतावच्छेदका-व्यापकत्वोभयसम्बन्धेन स्वघटकपदप्रयोज्यविषयताविशिष्टधर्मावच्छिन्नव्यापकताव-द्विषयताकशास्त्रस्य स्वेन = व्याप्येन बाधः। एवं सति स्वं = 'कुप्वोरि'ति शास्त्रं, तद्घटकपदं विसर्जनीयपदं, तत्पदप्रयोज्यविषयता विसर्जनीयनिष्ठा, तस्या व्यापकतावच्छेदको धर्मः, 'विसर्जनीयस्य सः', 'शर्परे विसर्जनीयः' इत्येतद्द्वयीयसूत्रनिष्ठान्यतरत्वं, तद्धर्मावच्छिन्नव्यापकतावद्विषयताकत्वमुभयोः सूत्रयोः समस्तीति प्रथमः सम्बन्धः साधु घटते। किन्तु द्वितीयः सम्बन्धो न घटते। तथा हि, 'कुप्वोरि'ति शास्त्रघटकपदविसर्जनीयपदप्रयोज्यविसर्गनिष्ठविषयताया व्यापकतावच्छेदकधर्ममन्यतरत्वमगृहीत्वा 'विसर्जनीयस्य सः' इत्येतच्छास्त्रीय-विसर्जनीयपदप्रयोज्यविषयतावृत्तितद्व्यक्तित्वं गृह्यते, तस्य व्यापकतावच्छेदकधर्मस्य तद्व्यक्तित्वरूपस्यान्यतरत्वं धर्मो व्यापक एव, न त्वव्यापको यो ह्यत्रापेक्ष्यते। अन्यतरत्वमादायात्र व्याप्यव्यापकशास्त्रयोर्बाध्यबाधकभावो विचारितः।

न चैवं सति, स्वं = 'उरृदि'[1]ति शास्त्रीयपदप्रयोज्यविषयता ऋपदप्रयोज्य-विषयता ऋनिष्ठा, तस्या व्यापकतावच्छेदको धर्मः 'उपधायाश्च'[2], 'मृजेर्वृद्धिः'[3], 'पुगन्तलघूपधस्य[4] च' इत्येतच्छास्त्रीय-ऋत्पदेक्पदप्रयोज्यविषयतात्रयवृत्त्यन्यतमत्वं तद्धर्मावच्छिन्नविषयताकत्वं त्रिष्वपि सूत्रेषु घटते; किन्तु द्वितीयसम्बन्धसङ्घटनसमये 'उरृत्'-सूत्रघटक-ऋत्पदप्रयोज्यविषयताव्यापकतावच्छेदकत्वमन्यतमत्वमगृहीत्वा 'उपधाया' इति 'पुगन्त' इति च शास्त्रद्वयीयोद्देश्यताख्यविषयतावृत्त्यन्यतरत्वं गृह्यते, तस्य च व्यापकत्वमेवान्यतमत्वं न त्वव्यापकं यदभीष्टम्। तथा च स्वव्यापकतावच्छेदकाव्यापकत्वसम्बन्धेन वैशिष्ट्याभावेन 'उरृत्'-शास्त्रस्येरराम-पवादत्वानापत्तिः। यथोक्तम्—'उरृदि'ति-शास्त्रीय-ऋपदप्रयोज्यविषयताया अपि

१. पा.सू. ७।४।७; २. पा.सू. ७।१।१०१।
३. पा.सू. ७।२।११४; ४. पा.सू. ७।३।८६।

'उपधायाः, 'मृजे:', 'पुगन्त' इत्येतच्छास्त्रत्रयीय-ऋपदेक्पदप्रयोज्यविषयतात्रय-वृत्त्यन्यतमत्वे स्वव्यापकतावच्छेदकीभूतं 'यदुपधायाः' इति 'पुगन्ते'ति शास्त्रद्वयीयोद्देश्यताख्यविषयताद्वयवृत्त्यन्यतरत्वं तद्व्यापकत्वस्यैव सत्त्वेन स्वव्यापकतावच्छेदकाव्यापकत्वरूपसम्बन्धेन वैशिष्ट्याभावेन 'उर्ऋदि'ति शास्त्रस्येरारामापवादत्वानापत्तेरिति चेन्न'[१], निरुक्तद्वितीयसम्बन्धघटकव्यापकता-वच्छेदकपदेन पुगन्तेति शास्त्रीयेक्पदप्रयोज्यविषयता, 'उपधायाश्चे'ति शास्त्रीया, ऋपदप्रयोज्यविषयता चेत्येतद्द्वयावृत्तिनो ग्रहणेन सर्वत्र दोषाभावात्।

अस्यायं स्फुटार्थः—स्वघटकपदप्रयोज्यविषयताव्यापकतावच्छेदको धर्मो नात्र 'उपधाया' इति 'पुगन्ते'ति शास्त्रीयोद्देश्यतान्यतरत्वं गृह्यते, येन तस्यान्यतमत्वे व्यापकतावद्विषयताकशास्त्रस्य व्यापके धर्मे, अव्यापकत्वं भवेत्किन्तु, निरुक्तद्वितीयसम्बन्धघटकव्यापकतावच्छेदकपदेन 'पुगन्ते'ति शास्त्रीयेक्पदप्रयोज्यविषयता 'उपधायाश्चे'ति शास्त्रीया, ऋपदप्रयोज्यविषयता चेत्येतद्द्वयावृत्तिनो धर्मस्य ग्रहणम्। अर्थाद् उपर्युक्तान्यतरत्वमिह व्यापकतावच्छेदकधर्मत्वेन न गृह्यते; किन्त्वन्य एव कश्चन धर्मः, यमादायाव्यापकत्वं गृह्येत, न तेन दोषः।

न चैवमपि 'यचि भम्'[२] इति शास्त्रेण बाध्यसामान्यचिन्तया 'सुप्तिङन्तं पदम्'[३], 'स्वादिष्वसर्वनामस्थाने'[४] इति शास्त्रद्वयबाधानापत्तिः; तदुभयशास्त्रीय-विषयताद्वयवृत्त्यन्यतरत्वस्य, स्वव्यापकतावच्छेदक'स्वादिष्वि'ति-शास्त्रीयविषयता-वृत्तितद्व्यक्तित्वव्यापकत्वात्; तथा च 'राजन्यः' इत्यत्र 'सुप्तिङन्तमि'ति पदत्वेन नलोपापत्तिरिति वाच्यम्, अत्र दोषापनयनाय पूर्वोक्तस्वव्यापकतावच्छेदका-व्यापकत्वस्थाने स्वव्यापकतावच्छेदकविशिष्टभिन्नत्वं गृह्यताम्। वैशिष्ट्यञ्च स्वव्यापकत्वस्वाश्रयविषयताऽव्याप्यविषयताऽवृत्तित्वोभयसम्बन्धेन। तथा च विस्तरः—स्वघटकपदप्रयोज्यविषयताविशिष्टधर्मावच्छिन्नव्यापकतावद्विषयताक-शास्त्रस्य स्वेन बाधः। वैशिष्ट्यञ्च स्वव्यापकतावच्छेदकत्वस्वव्यापकता-वच्छेदकविशिष्टभिन्नत्वोभयसम्बन्धेन। अत्रापि च वैशिष्ट्यम्—स्वव्यापकत्वस्वाश्रय-विषयताऽव्याप्यविषयताऽवृत्तित्वोभयसम्बन्धेन। स्वघटकपदप्रयोज्यविषयताया यो व्यापकतावच्छेदकः, तस्य च व्यापकः; अथ च स्वाश्रयविषयताऽ-व्याप्यविषयताऽवृत्तिर्यो धर्मस्तद्धर्मावच्छिन्नव्यापकतावद्विषयताकशास्त्रस्य स्वेन =

१. परिभाषेन्दुशेखरः, भूतिटीका, परि. ५८, बाधबीजप्रकरणम्।
२. पा.सू. १।४।१८; ३. पा.सू. १।४।१४।
४. पा.सू. १।४।१७।

व्याप्यशास्त्रेण बाधो भवति। यथाऽत्र स्वं = 'यचि भम्' तद्घटकपदं स्वादिरिति, तद्व्यापकतावच्छेदकं 'स्वादिष्वसर्वनामस्थाने', 'सुप्तिङन्तं पदम्' इति सूत्रद्वयवृत्त्यन्यतरत्वम्। अत्र द्वितीयस्मिन् वैशिष्ट्ये पूर्ववद् व्यापकतावच्छेदकत्वन्नान्यतरत्वं ग्रहीष्यामः, किन्तु तद्व्यक्तित्वम्। तथा च तद्व्यक्तित्वस्यान्यतरत्वं व्यापकमेवेति द्वितीयविशिष्टसम्बन्धस्य प्रथमः सम्बन्धो घटते; किन्तु द्वितीयो न घटते। यथा, स्वस्य = स्वादिशास्त्रस्य यत् तद्व्यक्तित्वं व्यापकतावच्छेदकत्वं तदाश्रयविषयता पञ्चवचनभिन्ना, तस्या अव्याप्यविषयता सुप्तिङन्तस्य। यतो हि सा 'राम' इत्यत्रापि वर्तते। ततस्तदव्याप्यविषयतावति सुप्तिङन्तशास्त्रेऽन्यतरत्वस्य वृत्तित्वमेव नाऽवृत्तित्वम्। तथा च 'एकसत्त्वेऽपि द्वयं नास्ती'ति न्यायेनोभयसम्बन्धेन स्वविशिष्टभिन्नत्वस्य सत्त्वेनोभयशास्त्रबाधकत्वं सुवचम्, इति सर्वं सुघटितम्। तथा च 'यचि भम्' इत्यनेन बाधः। न च 'राजन्यः' इत्यत्र नलोपापत्तिः।

## विशेषधर्मावच्छिन्नोद्देश्यताकशास्त्रस्य बाधकत्वे बीजम्

विशेषधर्मावच्छिन्नोद्देश्यताकशास्त्रस्य बाधकत्वे बीजं चतुर्विधम्—

१. तदप्राप्तियोग्येऽचारितार्थ्यम्।

२. तदप्राप्तियोग्येऽचारितार्थ्ये सति कृते चारितार्थ्यम्।

३. तदप्राप्तियोग्येऽचारितार्थ्ये सति कृतेऽचारितार्थ्यम्।

४. तदप्राप्तियोग्येऽचारितार्थ्ये सति अपवादशास्त्रप्रवृत्त्युत्तरमुत्सर्गशास्त्रप्रवृत्तावपवादशास्त्रप्रणयनवैयर्थ्यसम्भावना च।

सर्वथा तदप्राप्तियोग्येऽचारितार्थ्यमपवादशास्त्रस्य बाधकत्वे बीजम्। नास्ति तादृशं स्थलं यत्र बाध्यशास्त्रसामान्यधर्मावच्छिन्नोद्देश्यताकस्य प्राप्तिर्न स्यात्, चरितार्थञ्च बाधकशास्त्रं स्यात्। तदचारितार्थ्यमेव तद्बाधकत्वे बीजम्। अत्र तदप्राप्तियोग्यस्थलं तद्विधेयाघटितं गृह्यते तेन, तद्विधेयघटिते = उत्सर्गशास्त्रविधेयघटिते पुनरप्राप्तेः, विशेषशास्त्रस्य चारितार्थ्येऽपि न क्षतिः।

## प्रथमबाधबीजोदाहरणम्

अस्मिन् बाधबीजे उत्सर्गस्य पूर्वमप्रवृत्तिरित्येव बाधः। तथा चोत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नेऽपवादशास्त्रप्रवृत्तियोग्यलक्ष्यघटकातिरिक्तत्वेन सङ्कोचः। यथा च 'सम्बुद्धौ[1] च' इत्यस्य 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं[2] हल्'

---

१. पा.सू. ७।३।१०६; २. पा.सू. ६।१।६८।

इति सूत्राप्राप्तियोग्येऽचारितार्थ्येन सम्बुद्ध्यव्यवहितपूर्वत्वविशिष्टाबन्ताङ्गातिरिक्तत्वेन हल्ङ्यादिशास्त्रीयसुपदार्थे सङ्कोचात् 'रमा स्' इत्यत्र 'हल्ङ्यादि'सूत्राप्राप्त्या अनेनेत्वे 'एङ्ह्रस्वात्[1] सम्बुद्धेः' इत्यनेन सुलोपसिद्धिरिति। एवञ्च 'हे रमे' इति प्रयोगसिद्धिः।

न चात्र द्वितीयबाधबीजेन निर्वाहः, तस्य बीजस्य हल्ङ्यादिसूत्र-विषयेऽप्रवृत्तिस्वीकारात्। अत एव 'अनड्वान्' इत्यत्र सुलोपसिद्धिः। अन्यथा 'सावनडुहः'[2] इत्यनेन हल्ङ्यादिलोपस्य द्वितीयबाधबीजेन बाधापत्त्या नुमुत्तरं हल्ङ्यादिलोपानापत्तेः। अयमभिप्रायः—अनडुह्शब्दात्सौ, आमि; हल्ङ्यादिसुलोपः, 'सावनडुहः' इत्यनेन नुम् च प्राप्येते। तत्र यदि हल्ङ्यादिलोपस्थलेऽपि द्वितीयबाधबीजप्रवृत्तिस्स्यात्तदा 'अनड्वाह' इत्यत्र कृते सुलोपे प्रत्ययलक्षणेन नुमश्चारितार्थ्यात्, द्वितीयबाधबीजेन नुमा हल्ङ्यादिलोपस्य बाधापत्त्या नुमुत्तरं हल्ङ्यादिलोपो न स्यादिति।

**द्वितीयबाधबीजोदाहरणम्**

एतद्बाधश्च, उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने स्वविहितकार्याश्रयाति-रिक्तत्वेन सङ्कोचरूपः। यथा 'सर्वेषाम्' इत्यत्र 'ह्रस्वनद्यापो[3] नुट्' इत्यत्रामपदार्थे 'आमि सर्वनाम्नः[4] सुट्' इति शास्त्रविहितसुडाश्रयातिरिक्तत्वेन सङ्कोचात्, न सुडुत्तरं नुट्। 'आमि सर्वनाम्नः सुडि'त्यस्य नुडप्राप्तियोग्येऽचारितार्थ्यात्कृतेऽपि नुटि 'यदागम'न्यायेन चारितार्थ्याच्च द्वितीयबाधबीजेन सुटा नुटो बाधसिद्धिः। एतद्बाधबीजेनोत्सर्गशास्त्रस्योद्देश्यतावच्छेदकावच्छिन्ने अपवादशास्त्रस्य प्रवृत्तियोग्यातिरिक्तत्वेन स्वविधेयघटितातिरिक्तत्वेन चोभयथा सङ्कोचः क्रियते। तेनापवादशास्त्रप्रवृत्तियोग्यस्थले पूर्वं नोत्सर्गशास्त्रप्रवृत्तिः। न चापवादशास्त्रस्य विधेये सति पश्चादुत्सर्गशास्त्रप्रवृत्तिः। यथा प्रकृते, सुटः प्रवृत्तियोग्याददन्त-सर्वनामाव्यवहितोत्तरामः अतिरिक्तत्वेन सङ्कोचान्न सुटः पूर्वं नुट्। न च सुटि तद्घटितातिरिक्तत्वेन सङ्कोचान्नुट्। एतदेव तक्रकौण्डिन्यन्यायस्वरूपम्।

**तृतीयबाधबीजोदाहरणम्**

तृतीयबाधबीजेन तु, प्रथमबाधबीजप्रयोज्यसङ्कोचरूपघटकस्वप्रवृत्तियोग्यार्थे स्वीयोद्देश्यतावच्छेदकावच्छिन्नेति विशेषणदानरूपः सङ्कोचः क्रियते। बाधबीजेनानेन उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने अपवादशास्त्रस्य यत्स्वीयोद्देश्यता-

---

१. पा.सू. ६।१।६९; २. पा.सू. ७।१।८२।
३. पा.सू. ७।१।५४; ४. पा.सू. ७।१।५२।

वच्छेदकावच्छिन्नं स्वप्रवृत्तियोग्यं तददतिरिक्तत्वेन सङ्कोचः क्रियत इत्यर्थः। तथा च 'रमायाम्' इत्यत्र 'रमा' शब्दात् ङौ 'याडापः'[१] इत्यनेन याट्, 'ङेराम्नद्याम्नीभ्यः'[२] इत्यनेन ङेराम्च प्राप्येते। अत्र ङेराम् याट् अप्राप्तिस्थलेऽचरितार्थम्; सति च याटि, आबन्ताङ्गात् परत्वाभावात् पश्चादपि न ङेराम्, स्वीयोद्देश्यतावच्छेदकावच्छेदकत्वाभावात्। 'तदप्राप्तियोग्येऽचारितार्थ्ये सति कृतेऽचारितार्थ्यम्' इति तृतीयबाधबीजेन 'ङेराम्' इत्यादिसूत्रेण 'याडापः' इति सूत्रोद्देश्ये स्वीयोद्देश्यतावच्छेदकावच्छिन्नं यदाबन्ताङ्गाव्यवहितोत्तरत्वविशिष्टङित्वं, स्वप्रवृत्तियोग्यञ्च 'रमा ङि' इत्यादि, तददतिरिक्तत्वेन सङ्कोचः क्रियते। येन पूर्वम् आम्प्रवर्तते, पश्चाच्च स्थानिवद्भावेन ङित्वमादाय याट्प्रवृत्तिः।

यद्यपि अत्र प्रथमबाधबीजेन निर्वाहः, तथापि वाक्यसंस्कारपक्षे 'अयज इ इन्द्रम्' इत्यत्र 'आद्गुणः'[३] इत्यस्य प्रवृत्तये एतस्यावश्यकत्वम्। प्रथमबाधबीजे हि उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नेऽपवादशास्त्रप्रवृत्तियोग्यलक्ष्यघटकातिरिक्तत्वेन सङ्कोचः क्रियते। तथा ह्यत्र, इट इकारस्य 'अकः[४] सवर्णे दीर्घः' इति शास्त्रप्रवृत्तियोग्यत्वेनोत्सर्गशास्त्रस्य 'आद्गुणः' इत्यस्य प्रवृत्तिर्न स्यात्तथा चायजे इन्द्रम् इत्यस्यासिद्धिः स्यात्।

यद्यप्यत्र अच्पदार्थे 'अकः सवर्णे दीर्घः' इति शास्त्रप्रवृत्तियोग्यातिरिक्तत्वेन संकोचापेक्षया, 'आद्गुणः' इत्यत्र 'अकः सवर्णे दीर्घः' इति शास्त्रीयसवर्णाजव्यवहितपूर्वत्वविशिष्टाक्त्वरूपोद्देश्यतावच्छेदकावच्छिन्नो यः स्वप्रवृत्तियोग्यस्तददतिरिक्ताद् अवर्णादगव्यवहितपरसवर्णाजरूपस्वप्रवृत्तियोग्यातिरिक्तेऽचीत्येवंरूपस्यैव वा सङ्कोचस्यात्र प्राप्त्या, 'अयज इ इन्द्रम्' इत्यत्र अगव्यवहितपरसवर्णाच्त्वाभावादाद्गुण इत्यस्योद्देश्ये नात्र सङ्कोचः। तेन गुणस्य दुर्वारत्वेन नेदमप्यसाधारणं फलम्।

## चतुर्थबाधबीजोदाहरणम्

'कुलमि'ति चतुर्थबाधबीजोदाहरणम्। 'कुल सु' इति स्थिते 'अतोऽम्'[५] इति सूत्रेण सोरम्, [६]'स्वमोर्नपुंसकात्' इत्यनेन च तस्यैव लुगिति प्राप्येते। अत्राम्विधानं लुगप्राप्तावचरितार्थम्, कृते चामि तस्य 'स्वमोर्नपुंसकात्' इत्यनेन लुकि, अपवादशास्त्रस्य 'अतोऽम्' इति शास्त्रस्य प्रणयनं वैयर्थ्यमियात्। तस्मादत्र

१. पा.सू. ७।३।११३; २. पा.सू. ७।३।११६।
३. पा.सू. ६।१।८७; ४. पा.सू. ६।१।१०४।
५. पा.सू. ७।१।२४; ६. पा.सू. ७।१।२३।

चतुर्थबाधबीजेनापवादशास्त्रं स्वविहितकार्याश्रयातिरिक्तत्वेन उत्सर्गशास्त्रस्योद्देश्ये सङ्कोचं करोति। तेन अमि सति, पश्चादपि न लुक्। प्रथमबाधबीजेन बाधाच्चामः प्रागपि न लुगिति बोध्यम्।

**बाधबीजानां चतुष्ट्वं कथम्? द्वितीयेऽन्तर्भावात् समेषाम्**

केचित्—द्वितीयबाधबीजेनैव स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविहितकार्याश्रयातिरिक्तत्वेन चोत्सर्गशास्त्रे सङ्कोचः। 'रमे' इत्यत्र प्रथमबाधबीजोदाहरणेऽपि अनेनैव बाध इति प्रथमबाधबीजस्य नोपयोगः। न चास्य द्वितीयबाधबीजस्य हल्ङ्यादिलोपविषयेऽप्रवृत्तेः कथं 'रमे' इत्यत्र हल्ङ्यादिसुलोपेऽनेन सङ्कोच इति वाच्यम्, हल्ङ्यादिलोपविषये तदप्रवृत्तिस्वीकारे मानाभावात्। नापि फलमस्मिन्। ननु 'हल्ङ्यादिलोपविषये द्वितीयबाधबीजस्वीकारे 'अनड्वान्' इत्यत्र कथं सुलोपसिद्धिः, 'सावनडुहः' इत्यनेन हल्ङ्यादिलोपस्य बाधापत्त्या नुमुत्तरं हल्ङ्यादिलोपानापत्तेरिति चेन्न, 'अनड्वानि'त्यत्र पुनः पुनः संयोगान्तलोपेन निर्वाहात्। सावपि पदं भवतीत्यस्य सर्वाभिमतत्वेन 'अनड्वान् ह्स्' इति दशायामेकस्मिन्नेव काले 'संयोगान्तस्य लोपः'[1] इति सूत्रस्य वर्णद्वये प्राप्त्या, 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इति न्यायस्य विषयाभावात्। एवमेव तृतीयचतुर्थाभ्यां बाधबीजाभ्यां प्रथमबाधबीजप्रयोज्योऽपवादशास्त्रप्रवृत्तियोग्यलक्ष्य-घटकातिरिक्तत्वरूपः सङ्कोचः स्वीकरणीयः। सर्वबाधबीजान्तर्भावकेऽस्मिन् द्वितीयबाधबीजे, प्रथमबाधबीजस्य द्वितीयबाधबीजस्य च सङ्कोचौ स्वीकृतौ। येन प्रथमबाधबीजस्य सङ्कोचेन तृतीयचतुर्थबाधबीजयोः सर्वेष्टसिद्धिः। तेनापवादशास्त्रात्पूर्वमप्युत्सर्गाप्रवृत्तेरिति वदन्ति।

**प्रथमबाधबीजेऽन्येषामन्तर्भावः**

प्रथमबाधबीजेनैव सर्वत्र निर्वाहे अन्यानि त्रीणि बाधबीजानि निष्फलत्वान्नाङ्गीकार्याणि इत्यन्ये।

तत्र यथा द्वितीयबाधबीजस्योदाहरणेषु 'सर्वेषामि'त्यादिषु 'आमि सर्वनाम्नः सुट्' इत्यत्र आ आमीत्याकारप्रश्लेषेणाकारादावामि सुट्नुटोः प्रवृत्त्या प्रथमबाधबीजेन पूर्वं सुटि पश्चाच्चाकाराद्यामपरकत्वाभावेन नुटोऽप्राप्तिः।

'उर्णुनाव' इत्यादिषु यत्र द्वितीयबाधबीजेन प्रथमद्विर्वचनस्य तदुत्तरं सावकाशेनापि द्वितीयद्विर्वचनेन बाधस्तत्रापि 'अजादेर्द्वितीयस्ये'त्यनेन 'एकाचो द्वे प्रथमस्य' इत्यस्य परत्वाद् बाधेन 'सकृद्गतौ विप्रतिषेधे यद्बाधितं[2] तद्बाधितमेव'

---

१. पा.सू. ८।२।२३; २. परिभाषेन्दुशेखरे, प. ४०।

इति न्यायान्न पुनरेकाच् इत्यस्य प्रवृत्तिः। यद्वा, प्रथमबाधबीजेन 'एकाच्' इत्यस्य बाधेन अनभ्यासग्रहणेन तत्प्रत्याख्यानप्रकारेण[1] वा न पुनस्तत्प्राप्तिः।

'रमायामि'त्यत्र प्रथमबाधबीजेनापवादशास्त्रप्रवृत्तियोग्यलक्ष्यघटकातिरिक्तत्वेनोत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचात्, अर्थादाबन्ताङ्गाव्यवहितपरत्वविशिष्टङित्त्वेन सङ्कोचाद् याटः पूर्वमाम्सिद्धिरिति तृतीयस्य नैतत्फलमिति पूर्वमुपपादितमेव। 'अयजे इन्द्रम्' इत्यत्र तु 'अपवादो[2] यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते' इति न्यायेनैव दीर्घात् पूर्वमाद्गुणप्रवृत्तिरिति तत्रैवोपपादितम्। एवञ्च तृतीयस्यापि बाधबीजस्य नासाधारणं फलम्।

चतुर्थबाधबीजफले 'कुलमि'त्यत्रापि प्रथमबाधबीजेन 'स्मोरि'त्यस्य बाधेन पूर्वमप्रवृत्त्याऽमुत्तरञ्च 'अतोऽमि'ति सूत्रारम्भसामर्थ्यादेव तद्बाधसिद्धिरिति वदन्ति शाब्दिकमूर्धन्याः।

**तक्रकौण्डिन्यन्यायेन द्वितीयबाधबीजेन बाधस्वीकारे दोषाः**

किञ्च, तक्रकौण्डिन्यन्यायेन द्वितीयबाधबीजेन बाधस्वीकारे काश्चिदापत्तयोऽप्यापतन्ति। यथा 'ई घ्रा ध्मोः'[3] 'हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः'[4] इत्यादिभिर्द्वित्वबाधापत्तिः। 'जेघ्रीयते' 'देध्मीयते' इत्यनयोः प्रयोगयोः कृतेऽपि द्वित्वे अभ्यासविशिष्टे धातुत्वस्वीकाराद् ईत्वप्राप्तेः। अत एव कृतेऽपि द्वित्वरूपोत्सर्गशास्त्रे पश्चादीत्वापवादशास्त्रस्य प्रवृत्तेरीत्वेन द्वित्वबाधापत्तिः। एवमेव 'देध्मीयते' इत्यत्रापि बोध्यम्। 'तदोः सः[5] सावनन्त्ययोः 'अनाप्यकः'[6] इति सूत्राभ्यां त्यदाद्यत्वबाधापत्तिः। 'सः' इत्यादिप्रयोगे 'त्यदादीनामः'[7] इत्यनेनात्वे कृतेऽपि अनन्त्यस्य तकारस्य सत्वप्रसक्तिः, तेन कृतेऽप्युत्सर्गेऽपवादचारितार्थ्यात् त्यदाद्यत्वबाधापत्तिः। एवमेव 'अनेन' इत्यत्र कृतेऽप्यत्वेऽनि सिद्धे, पूर्वोक्तद्वितीयबाधेनात्वबाधापत्तिः। 'तावकीनः, तावकः, मामकीनः, मामकः' इत्येतेषु प्रयोगेषु 'तवकममकावेकवचने'[8] इत्यनेन तवकममकादेशयोः आदिवृद्धौ सत्यामपि चारितार्थ्यात्, आदेशेनादिवृद्धिबाधापत्तिः। 'स्यतासी ऌलुटोः'[9] इत्यनेन च 'भवितासि' इत्यादिप्रयोगेषु कृतेऽपि तिबादिषु स्थानिवद्भावेन तासश्चारितार्थ्यात् तासा तिबादिबाधापत्तिः। एवमेव स्येऽपि ज्ञेयम्। 'पक्वः' इत्यत्र च 'पचो वः'[10]

---

१. महाभाष्यम्, ६।१।८;
२. परिभाषेन्दुशेखरे, प. ६६।
३. पा.सू. ७।४।३१;
४. वार्तिकम्-४६२१।
५. पा.सू. ७।२।१०६;
६. पा.सू. ७।२।११२।
७. पा.सू. ७।२।१०२;
८. पा.सू. ४।३।३।
९. पा.सू. ३।१।३३;
१० पा.सू. ८।२।५२।

इत्यनेन निष्ठातस्य वत्वं 'चो: कु:'[1] इत्यनेन कृतेऽपि कुत्वे सिद्धम्। अतस्तेन तक्रकौण्डिन्यन्यायेन द्वितीयाबाधबीजेन कुत्वबाधापत्तिरित्यादयो दोषा: स्वीकारेऽस्य समापतन्ति। न चैतदादिषु बहुषु लक्ष्येष्वननुगतत्वात् तस्य बाधबीजस्यानित्यत्वमेव स्वीकार्यमिति वाच्यम्, अनित्यत्वस्वीकारापेक्षया तदस्वीकारस्यैव श्रेयस्करत्वात्। एतस्यास्वीकारादेव 'इदमो म:'[2] इति सूत्रं चरितार्थम्; अन्यथा 'अयम्' इति प्रयोगेऽनेन बाधबीजेन बाधबीजस्वीकारे कृतेऽपि त्यदाद्यत्वे, चारितार्थ्याद् अयादेशस्य, तेनायादेशेन त्यदाद्यत्वबाधसिद्धिस्तदर्थं मस्य मविधिर्व्यर्थ:। एवमेव 'इयम्' इति प्रयोगेऽपि 'य: सौ'[3] इत्यनेनात्वे कृतेऽपि चरितार्थतां प्राप्ते बाधसिद्धि:, तदर्थं 'इदमो म:' इति सूत्रं व्यर्थम्। एवञ्च पाणिनिसूत्रमेव ज्ञापकं यद् द्वितीयबाधबीजं न स्वीक्रियत इति।

न चैतदस्वीकारे 'नेमौ रहावि'ति भाष्यासङ्गति:, 'हर्यनुभव:' इत्यादौ रेफस्य द्वित्वापत्तिश्च, मम तु तक्रन्यायेन 'अनची'त्यत्र यर्पदार्थे रेफातिरिक्तत्वेन सङ्कोचात्तदप्राप्तिरिति वाच्यम्; अत्र तक्रन्यायेन सङ्कोचेनेष्टसिद्धेरयोगात्। तक्रन्यायेन हि विशेष्यविशेषणदलप्रविष्टयावत्पदार्थसङ्कुचितव्याप्यतावच्छेदकरूपावच्छिन्नातिरिक्तत्वेन सङ्कोच आवश्यक:, अन्यथा ह्रस्वनद्यापो' इत्यत्राऽऽम्पदार्थेऽवर्णावधिकपरामतिरिक्तत्वेन सङ्कोचापत्तौ 'रामाणामि'त्यत्र नुडनापत्ते:। एवम् 'एकाचो द्वे प्रथमस्य' इत्यत्र अजादिधात्वतिरिक्तत्वेन सङ्कोचे 'आटे'त्यत्र द्वित्वानापत्तेश्च। एवम् 'अनचि चे'त्यत्रापि यरवधिकपूर्वत्ववदजवधिकपरत्ववद्रेफातिरिक्तत्वेन 'अचो रहाभ्यामि'ति सूत्रस्य विशेषणविशेष्यदलप्रविष्टयावत्पदार्थसङ्कुचितव्याप्यतावच्छेदकरूपावच्छिन्नातिरिक्तत्वेनोक्तदोषाणामभावाय सङ्कोच आवश्यक:। तादृशे च सङ्कोचेऽभ्युपगते 'अर्हेण' इत्यत्र तादृशरेफातिरिक्तयर: सत्त्वेन रेफस्यानचीति द्वित्वापत्ते:। तादृशसङ्कुचितयर्पदस्य च सूत्रवार्तिकयोरपि सम्बन्धे 'मद्रह्रदो' 'धात्रंश' इत्यादौ रेफस्य 'यणो मयो[4] द्वे वाच्ये' इत्यनेन वार्तिकेन द्वित्वापत्तेर्दुर्वारत्वाच्च। किञ्च 'अनचि चे'त्यस्य वैकल्पिकत्वेन 'शेषाद्विभाषा' इति सूत्रस्थभाष्यरीत्या रपदप्रयोज्यनिमित्तताख्यशाब्दविषयतायास्तदप्राप्तियोग्येऽचारितार्थ्यमपि दुर्वचमेव। अभावपक्षे तदप्राप्तियोग्ये चारितार्थ्यात्। तस्मादत्र तक्रन्यायादन्येन 'माठरपरिवेषण'न्यायेनैव बाध्यबाधकभाव:। अत एव तत्र सूत्रे भाष्ये माठरपरिवेषणन्याय एतदुपष्टम्भकतया प्रतिपादित:।

---

१. पा.सू. ८।२।३०।

२. पा.सू. ७।२।१०८।

३. पा.सू. ७।२।११०।

४. हयवरट्-सूत्रभाष्यप्रदीपोद्योते।

यत्तु केनचित्— [१]शेखरकृता हि 'माठरपरिवेषण'न्यायं तक्रन्यायादभिन्नं मत्वा तक्रन्यायेनेत्युक्तं, तदयुक्तमेव, 'सर्वे ब्राह्मणा भोज्यन्ताम्, माठरकौण्डिन्यौ परिवेविषाताम्' इति हि तन्न्यायस्वरूपम्। अनेन चैककार्यविनियोगोद्देश्येन प्रवृत्तवाक्यकदम्बघटकव्यापकपदार्थे तत्प्रकरणघटकव्याप्यपदार्थातिरिक्तत्वेन सङ्कोचः क्रियते। अत एव [२]'ष्णान्ताः षडि'ति टान्तशब्दनिर्देश उपपद्यते; अन्यथा षष्शब्दे तक्रन्यायेन 'झलां [३]जशोऽन्ते' इत्यनेन कृतं जशत्वं बाधित्वा 'वाऽवसाने'[४] इत्यनेन विवारश्वासाघोषवतो महाप्राणवतः षकारस्य स्थाने चर्त्वेन षकारे तदभावे जश्त्वेन डकारेऽपि टान्तनिर्देशासङ्गतिः।

अयं भावः—तक्रन्यायेन द्वितीयबाधबीजेन, जश्त्वेन डकारेऽपि, चर्त्वस्य सिद्धत्वात् जश्त्वं बाध्यते। तेन 'षष्'शब्दस्य षकारस्य टकारषकारयोर्मूर्धास्थानसाम्येऽपि आन्तरतम्यपरीक्षया विवारश्वासाघोषवतो महाप्राणवतश्च षकार एव चर्त्वेन विधीयते। 'वाऽवसाने' इत्यस्य वैकल्पिकत्वात् चर्त्वाभावे जश्त्वेन डकारेऽपि टान्तनिर्देशासङ्गतिः। ततश्च चर्त्वविधिपक्षे 'षष्' तदभावपक्षे च 'षड्' इति निर्देशः स्यान्न तु 'षट्' इति। मम तु मते 'वाऽवसाने' इत्यत्रैव व्याप्यचर्पदार्थातिरिक्तत्वेन तच्छास्त्रीयव्यापकझल्पदार्थे सङ्कोचेन 'वाऽवसाने' इत्यस्याप्राप्त्या पूर्वं जश्त्वेन डकारे, पश्चात्तस्यैव चर्त्वेन टकारे उक्तनिर्देश उपपद्यते। अत एव 'इको यणची'त्यत्रानेन 'दध्युदकादौ' क्वचिद् निमित्तत्वमश्नुवानस्येकारस्य कार्यित्वं 'माठरपरिवेषण'न्यायेन बाध्येत इत्याशङ्क्य 'तस्मादित्युत्तरस्ये'ति निर्देशान्न बाध्यत इति कैयटः[५]। तत्र माठरकौण्डिन्यन्यायमेवोपक्रम्य विचारः प्रक्रान्तः। पाणिनेर्हि वर्णद्वित्वं वक्ष्यामीतीच्छायाः सत्त्वेन तादृशद्वित्वप्रकरणीयव्यापकपदार्थे यरात्मके च रेफरूपव्याप्यपदार्थातिरिक्तत्वेन सङ्कोचात्; 'अर्हेण, मद्रह्रदः, धात्त्रंशः' इत्यादौ 'अनचि च' 'अचो रहाभ्यां, 'यणो मयो द्वे' इत्यादिभिर्द्वित्वं नेति। अत एव वार्तिककृताऽप्यसम्भव एवापवादत्वं विरोधस्य तद्बीजत्वादित्यादिनाऽनन्यथासिद्धफलाभावेन च तदनङ्गीकार आदृत इति शम्।

●

---

१. पा.सू. १।१।२४; २. पा.सू. ८।२।३९।

३. पा.सू. ८।४।५६; ४. हयवरट्-सूत्रप्रदीपे।

# रोमकसिद्धान्तानुशीलनम्

**डॉ॰ नागेन्द्रपाण्डेयः**
उपाचार्यः, ज्योतिषविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी



प्राचीनसिद्धान्तपञ्चके रोमकसिद्धान्तोऽन्यतमः। सुविदिततथ्यमिदं यदाचार्यवराहमिहिरेणैव पञ्चसिद्धान्तानां सर्वप्रथमं वर्णनं कृतम्।

तेषामाचार्यवर्याणां पञ्चसिद्धान्तिकानामके ग्रन्थे पौलिशरोमकवासिष्ठसौरपैतामहेति पञ्चसिद्धान्तानां विस्तृतं वर्णनं दरीदृश्यते। यथात्र ग्रन्थकारोक्तिः—

पौलिशरोमकवासिष्ठसौरपैतामहास्तु पञ्चसिद्धान्ताः।
पञ्चभ्यो द्वावाद्यौ व्याख्यातौ लाटदेवेन।। (१.३)

अत्रेदमपि संसूचितमाचार्येण यदाद्ययोर्द्वयोः पौलिशरोमकयोर्व्याख्याता लाटदेवनामकोऽस्ति एक आचार्यः। कोऽयं लाटदेवः? इत्यस्य विचारोऽग्रे भविष्यति, प्रथमन्तु रोमकसिद्धान्तस्यानुशीलनमावश्यकम्। आचार्यवराहमिहिरेण पञ्चसिद्धान्ताधारेण गणितं कृत्वा ग्रहाणां निरीक्षणं कृतम्। एषाम्पञ्चसिद्धान्तानां कः सिद्धान्तस्साधु घटते, कस्य च सिद्धान्तस्य ग्रहगणितीयप्रक्रिया शुद्धताम्भजते, इत्येतत्सर्वं तात्कालिकग्रहावलोकनेन विनिश्चितञ्ज्ञातम्। तथा चोक्तम्—

पौलिशकृतस्स्फुटोऽसौ तस्यासन्नस्तु रोमकः प्रोक्तः।
स्पष्टतरस्सावित्रः परिशेषौ दूरविभ्रष्टौ।। (१.४)

वराहमिहिरस्स्वयमेव सर्वेषां सिद्धान्तानामनुशीलनं कृत्वा गणितीयमानानां परिशोधनार्थं परीक्षणार्थञ्च ग्रहवेधं कृतवान्। वेधानन्तरमुद्घोषितवान् यदत्र सर्वविधपरिशुद्धस्सूर्यसिद्धान्तो विद्यते। तस्यासन्नौ पौलिशरोमकौ च वर्तेते। तथा च वसिष्ठपैतामहौ द्वावपि सिद्धान्तावशुद्धौ स्तः। एवं रोमकसिद्धान्तस्य महत्त्वं गणितीयदृष्ट्या महत्त्वपूर्णं शुद्धञ्च सिद्ध्यति। रोमकसिद्धान्तस्यास्य

वर्णनमाचार्यब्रह्मगुप्तकृतब्राह्मस्फुटसिद्धान्ते दृश्यते। ब्रह्मगुप्तस्य कथनेनास्य रोमकसिद्धान्तस्य महत्त्वं वर्द्धते। यथा ब्रह्मगुप्तेनोक्तम्—

पौलिशरोमकवासिष्ठसौरपैतामहेषु यत् प्रोक्तम्।
तन्नक्षत्रानयनं नार्यभट्टोक्तं तदुक्तिरत:।। (४.४६)

अनेनात्र विज्ञायते यद् ब्रह्मगुप्तस्य काले (५५० शतके) रोमकसिद्धान्तस्य प्रचलनमासीत्। आर्यभट्टस्य ग्रन्थे पञ्चसिद्धान्तानां समुल्लेखो नास्तीत्यत्र कारणमपि स्पष्टम्। वराहमिहिरसङ्कलितेषु पञ्चसिद्धान्तेषु येषां पञ्चसिद्धान्तानां विवरणानि सन्ति तेषाम्प्रचारोऽल्प एव आसीदार्यभट्टस्य (४२६ शतके) काले। श्रीषेणाचार्येण कृते (सङ्कलिते, सम्पादिते वा) रोमकसिद्धान्ते मूलरोमकसिद्धान्तस्य विस्तारोऽधिको वर्तते, प्राय: सर्वत्रास्यैव पञ्चसिद्धान्तस्य चर्चा भवति। सिद्धान्तग्रन्थेष्वस्यैव रोमकसिद्धान्तस्य विषये ब्रह्मगुप्तो लिलेख—

युगमन्वन्तरकल्पा: कालपरिच्छेदका: स्मृतावुक्ता:।
यस्मान्न रोमके ते स्मृतिबाह्यो रोमकस्तस्मात्।।

अनेन प्रकारेण रोमकसिद्धान्तस्य विस्तार: सिद्ध्यति। इत्थमत्र विज्ञायते यत् श्रीषेणाचार्यात् पूर्वं रोमकसिद्धान्तस्य प्रचलनमासीद् यस्य सङ्कलनं कृतं वराहमिहिरेण। रोमकसिद्धान्तस्य प्रथमा आर्या एवं विद्यते—

सप्ताश्विवेद(४२७)संख्यं शककालमपास्य चैत्रशुक्लादौ।
अर्धास्तमिते भानौ यवनपुरे भौमदिवसाद्य:[१]।।

अत्र ४२७ शकाब्दं वर्षं स्वीकृत्य ग्रहाणामानयनं प्रतिपादितम्। वर्षेऽस्मिन् मध्यममेषसङ्क्रान्तिदिनम्पञ्चोत्तरपञ्चख्रिष्टाब्दे मार्चमासस्य विंशतितारिका सिद्ध्यति (२०।५।५०५ ईस्वीय)कालोऽयं रोमकसिद्धान्तस्य प्रणयनस्य नास्ति, अपि तु वराहमिहिराचार्यस्य गणितारम्भस्य कालोऽयम्। निश्चप्रचं ५०५ ख्रिष्टाब्दात् पूर्वमेव रोमकसिद्धान्तस्य रचना सञ्जाता, येन वराहमिहिर: स्वकीये कार्ये नूतनां गणनां कृत्वा ग्रहगणितसाधनस्य परीक्षणं कृतवान्।

अत्र ग्रन्थे विशिष्टरूपेण रोमकयुगस्य समुल्लेखोऽस्ति। यथा २८५० वर्षाणां युगपरिकल्पना विद्यते। अत्रैकस्मिन् युगे १०५० अधिमासा:, तथा च १६५४५ तिथिक्षया: प्रलयरूपेण निरूपिता: सन्ति। यथात्र तद्वाक्यम्—

---

१. १।१।

रोमकयुगमर्केन्दोर्वर्षाण्याकाशपञ्चवसुपक्षः।
खेन्द्रियदिशोऽधिमासाः स्वरकृतविषयाष्टयः प्रलयाः[१]।।

अनेनेदमपि परिकल्प्यते यत्तस्मिन् काले प्रचलितमान्यतानुसारं महायुगस्य मानं ४३२०००० वर्षात्मकन्नासीदिति।

ग्रीकज्योतिर्विदः हिपार्कसमहोदयस्य कालः ई.पू. १५० वर्षं स्वीक्रियते। एतस्य वर्षमानं (३६५।१४।४८) यदस्ति तदेव रोमकसिद्धान्तेऽपि प्राप्यते। तदनन्तरं टालमीमहोदयस्य ग्रन्थे इत्थमेव वर्षमानं स्वीकृतमस्ति। आलोचका एवं वदन्ति यत् टालमीमहोदयात् पूर्वमेव ग्रीकज्योतिषशास्त्रस्य प्रभावो भारते प्रसृतोऽभवत्।

अत एव हिपार्कसटालमीज्योतिर्विदोर्मध्य एव रोमकसिद्धान्तस्य रचना सम्भाव्यते। तत्रापि हिपार्कसमहोदय एव रोमकसिद्धान्तस्य प्रेरकः। अथवा तद्ग्रन्थाधारेणैव केनापि भारतीयेन विदुषा सिद्धान्तोऽयं प्रतिपादित इत्यत्र भवति सन्देहः।

अतो हिपार्कसमहोदयस्य कालात् (१५० ई.) पश्चात् तथा च टालमीमहोदयस्य कालात् (१५०) पूर्वमेव ग्रन्थोऽयं विलिखितः। विचारोऽयं बर्जेस(Burgess)महोदयस्य सूर्यसिद्धान्तस्य आंग्लानुवादे ३०३ पृष्ठे प्राप्यते। एवमेव ग्रान्ट्स्महोदयस्य (Grants) ज्योतिषशास्त्रस्येतिहासस्य[२] भूमिकायां प्राप्यते।

भारतीयज्योतिषमिति ग्रन्थस्य रचयितुः श्रीबालकृष्णदीक्षितमहोदयस्य मतस्याधारेणैवं परिकल्पितम्। परञ्च रोमकसिद्धान्तात् पूर्वमेव अर्थाद् हिपार्कसमहोदयस्य कालात् (१५० ई.) पूर्वमेव पैतामहसिद्धान्तस्य वासिष्ठ-सिद्धान्तस्य च रचना निर्विवादरूपेण अभवदिति सर्वैः स्वीक्रियते, तर्हि कथन्नाम सिद्धान्तद्वयस्य विद्यमानत्वेऽपि ग्रीकज्योतिर्विदोऽनुकुर्वाणाः केऽपि भारतीयाः सिद्धान्तसम्पादने संलग्ना बभूवुः, इति विचारस्य विषयः।

वर्षमानस्य साम्याद् यत् समालोचकैः प्रतिपादितं, तन्नास्ति तर्कयुक्तम्। यतो हि वर्षमानगणितसाधने रोमकसिद्धान्तकारस्य सामर्थ्यं नासीदिति वक्तुं न शक्यते। तत्र युगमानस्य या नूतना व्यवस्था प्रकल्पिता सापि अभूतपूर्वा नूतनैव दृश्यते। अतोऽत्र ग्रन्थकारस्य अन्वेषणदृष्टिः, चमत्कारपूर्णा च धीः, सुप्रमाणिता

---

१. १।१।

२. Almajest-History of Physical Astronomy, introduction, p. 439.

भवति। अतोऽत्र निःसंशयेन वक्तुं पार्यते स्वकीयज्ञानबलेन रोमकसिद्धान्तस्य रचना हिपार्कसमहोदयात् पूर्वमेव केनापि ज्योतिर्विदा कृता।

पञ्चसिद्धान्तेषु केषां सिद्धान्तानां रचना केन कालक्रमेण अभवदिति बालकृष्णदीक्षितमहोदयेन सम्यग् विचारितम्। तत्र पैतामह-वासिष्ठ-पौलिश-सौर-रोमकसिद्धान्ताः क्रमेण विरचिता मन्यन्ते। रोमकसिद्धान्तस्य व्याख्यानं लाटदेवेन भारतीयविदुषा कृतमिति तत्रैव समुल्लिखितम्। यथा—

पञ्चभ्यो द्वावाद्यौ पौलिशरोमकसिद्धान्तौ।
व्याख्यातौ लाटदेवेन[1]।

परञ्चेदमवधेयं यदत्र लाटदेवः केवलं व्याख्यां कृतवान्। न हि सः सिद्धान्तस्यास्य प्रणेता। इत्थमत्र निबन्धेऽस्माभी रोमकसिद्धान्तस्य विषये किञ्चिद् विचारितम्। प्रायश आधुनिका रोमकशब्दं दृष्ट्वा रोमकसिद्धान्तं वैदेशिकाः कृतवन्त इति मन्यन्ते; परन्तु रोमशसिद्धान्तोऽपि प्राप्तोऽस्ति। रोमशलोमशशब्दयोः साम्यमपि सहजतयावबोद्धुं शक्यते। इयमेव रोमकशब्दस्य व्युत्पत्तिरपि यत्—करोतीति कः, रोमस्य कः रोमकः। अथवा रोम एव रोमक इति भवति। सुप्रसिद्धस्य रोमकनगरस्य साम्यं नैवात्र कल्पनीयम्। यद्यपि ज्योतिषग्रन्थेषु सिद्धपुरस्य यवनपुरस्य रोमकपत्तनस्य अक्षांशादि सूर्योदयादि च विगणितम्।

परन्त्वत्र ज्योतिषशास्त्रस्य सार्वभौमिकता हिन्दूसंस्कृतेश्च सुप्रभाव एव कारणम्। अस्माभिः प्राचीनशास्त्राणामन्तःसमीक्षणं कृत्वैव आधुनिकसमीक्षकाणां वर्णिततत्त्वानामनुशीलनं करणीयमिति ममाभिप्रायः। मन्ये, विषयेऽस्मिन् अन्येऽपि गवेषका विचारं विधास्यन्तीति।



१. पञ्चसिद्धान्तिका—१।३।

# वेदान्तमीमांसाशास्त्रारम्भणं युक्तम्

## [ विमर्शः ]

**डॉ० कमलाकान्तत्रिपाठी**
अध्यक्षः, मीमांसाविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी



[ सारस्वतां सुषमायां प्रकाशितान् लेखविशेषान् अधिकृत्य विचारसरणीं प्रवर्तयितुं 'विमर्शः' इति नाम्ना कश्चन स्तम्भविशेषः समारब्धः। ५६ वर्षे १-२ अङ्कयोः प्रकाशितमाचार्यश्रीपारसनाथद्विवेदिमहाभागानां 'वेदान्तमीमांसाशास्त्रारम्भणं युक्तम्' इति लेखमधिकृत्य डॉ. कमलाकान्तत्रिपाठिमहोदयैः कृतो विमर्शः प्रकाश्यते। एतदुपर्यपि विदुषां विचाराः प्रार्थ्यन्ते—सम्पादकः ]

अस्ति तावद् महर्षिजैमिनिप्रणीता द्वादशलक्षणी महर्षिबादरायणप्रणीता च चतुर्लक्षणी वेदार्थज्ञानौपयिकविचारात्मकन्यायनिबन्धनात्मिका मीमांसापदवाच्या। तत्राद्या पूर्वमीमांसा अन्या चोत्तरमीमांसेति व्यवहारपदवीमधिरूढा। उभयोः केचिदेकशास्त्रत्वमन्ये भिन्नशास्त्रत्वञ्चाङ्गीकुर्वन्ति। यद्येकशास्त्रत्वं तर्हि ब्रह्ममीमांसाया नियमेनोभयोर्वेदाध्ययनानन्तर्यवत् कर्ममीमांसानन्तर्यमपेक्ष्यत एव। यदा भिन्नशास्त्रत्वं तदा ब्रह्ममीमांसायाः साधनचतुष्टयसम्पत्त्यैव सिद्धेर्न कर्ममीमांसानन्तर्यं नियमेनापेक्ष्यते। इष्यते च कर्मणामनुष्ठानस्य चित्तशुद्ध्यादावुपयोग उभयवादिभिरपि। कर्मानुष्ठानञ्च नर्तेऽर्थज्ञानात् सम्भवति। अर्थज्ञानस्य च कर्मानुष्ठानाङ्गत्वं केवललिङ्गादेव, तस्य तदनुष्ठानौपयिकत्वात्। उक्तमेतदापदेवेन—'यदन्तरेण यन्न सम्भवत्येव तस्य तस्य तदङ्गत्वं तदनपेक्षं केवललिङ्गादेव यथा—'अर्थज्ञानस्य कर्मानुष्ठानाङ्गत्वम्। न ह्यर्थज्ञानमन्तरेणानुष्ठानं सम्भवति' इति[1]। एवं नित्यनैमित्तिककर्मणां ब्रह्मवादिभिरप्यपेक्षितत्वात्तदनुष्ठानाय कर्ममीमांसाया अप्यवश्यानुष्ठेयत्वं बलादायातीत्येकशास्त्रत्वमेवोभयोः युक्तमिव प्रतिभाति। अभ्युपगतमेतद् विशिष्टाद्वैतवादिभिः। यदि पुनर्जन्मान्तरीयकर्ममीमांसानुशीलनपुरः-

१. मीमांसान्यायप्रकाशे सारविवेचनीयुते, ३८ तमे पृष्ठे।

सरनित्यनैमित्तिककर्मानुष्ठानवशादेव ब्रह्मजिज्ञासा जायेत तदा कर्ममीमांसाया अवश्यानुष्ठेयता न स्यात्, येन च तदानन्तर्याभावाद् ब्रह्मजिज्ञासाया भिन्नशास्त्रत्वमपि सिद्ध्येत्। न त्वेवमस्ति। अव्यवस्थाप्रसङ्गात्। शूद्रादीनामपि जन्मान्तरीयकर्मवशादेव ब्रह्मजिज्ञासासत्त्वात्तत्र तेषामधिकारः कथमपि निवार्यो न स्यात्। अपशूद्राधिकरणन्यायविरोधश्च तदा शिरसि सीधुपरिपूरितघट इव निपतेत्। अपि च तदा ब्रह्मजिज्ञासाया वेदाध्ययनानन्तर्यमपि न स्यात्। कथम्?[1] जन्मान्तरीयाध्ययनादेव तत्राधिकारितालाभात्। वेदाध्ययनानन्तर्यं ब्रह्मजिज्ञासाया 'वेदाध्ययनानन्तर्यन्तु समान'मिति वदद्भिर्भगवत्पादैरङ्गीकृतमेव।

एवञ्च प्रयोजनवदर्थज्ञानौपयिकत्वाद् वेदाध्ययनमन्तरेण धर्माधर्मविचारो यथाऽसङ्गतस्तथैव ब्रह्मविचारोऽपीति भगवत्पादानामाशयः। अध्ययनं विना वेदार्थविचारस्यासम्भवादेव न तद्विना साधनचतुष्टयसम्पत्सचिवस्यापि कृते ब्रह्मजिज्ञासोपकल्पते। तथा हि भाष्यकारेणोक्तम्[2] —

'तादृशीन्तु धर्मजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यः, या वेदाध्ययनमन्तरेण न सम्भवति। कथं वेदवाक्यानामनेकविधो विचार इह वर्तिष्यते'। इति।

अनेकविधविचारायाध्ययनस्यावश्यकर्तव्यतानेन भाष्येण ध्वन्यते। अध्ययनञ्चोपनीतस्य सनियमस्यैव वटोरिति न्यायसिद्धम्। अत्र तादृशीं धर्मजिज्ञासामधिकृत्येति भाष्येण जिज्ञासाया वैविध्यमप्यायाति। तथा ह्युक्तं पार्थसारथिमिश्रैः[3] —

'जिज्ञासैकोपनीतस्य द्वितीया पठितश्रुतेः।
ज्ञातविद्यान्तरस्यान्या या मीमांसापुरःसरा'।। इति।

अयमभिप्रायः—पूर्वन्तावद् वृद्धवाक्यश्रवणसमनन्तरं धर्माधर्मविषयक-ज्ञानसम्पादनेच्छया स्वाध्यायविध्यनुरोधेन सनियमं वेदमधीते। अधीतवेदस्तु व्याकरणादिना गृहीतपदपदार्थसङ्गतिको न्यायज्ञानपरिशून्यतया संशयान्तरितचेता मीमांसाधीतितत्परो भवति। चरमजिज्ञासाभिप्रायेणैवात्र पूर्वोक्तं भाष्यं नेयं भवति। एवन्तावत् कर्तव्यैवेति धर्मजिज्ञासायाः कथमिव त्यागो भवेत्। मीमांसान्यायानाकलनेन साधनचतुष्टये जातेऽपि कथं वा याथातथ्यतो वेदान्तं विचारयेत्। तस्मादुभयोरेकशास्त्रत्वमेवाङ्गीकर्तव्यम्।

---

१. वैयासकिसूत्रे, १।१।१। २. शाबरभाष्ये कल्पकलिकायुते, १६ तमे पृष्ठे।
३. न्यायरत्नमालायाः प्रयुक्तितिलके, ११ पृष्ठे।

'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्याश्चैताश्चतुर्दश'।।

इति चतुर्दशविद्यामध्य एकैव मीमांसा निर्दिष्टा, सा चैकशास्त्रत्वं विनानुपपन्ना। एकशास्त्रत्वमपि न रामानुजीयानामिव मीमांसकानामभिमतमस्ति। ते हि पूर्वभागनिश्चितस्य कर्मणोऽल्पास्थिरफलकत्वं चरमभागनिश्चितस्य ब्रह्मज्ञानस्यानन्ताक्षयफलकत्वमङ्गीकुर्वन्ति। तेन चात्मज्ञानस्यैव प्राधान्यं कर्मानुष्ठानस्य तदङ्गत्वं सिद्ध्यति। एवं तर्हि कर्मब्रह्ममीमांसयोः पौर्वापर्यस्वीकरणं केवलमदृष्टार्थं स्यात्। तत्तु दृष्टे सम्भवति न युज्यते। साधनचतुष्टयसम्पद एवाध्ययनसचिवाया ब्रह्मजिज्ञासाप्रयोजकत्वाङ्गीकारे न काचित् क्षतिः।

अपि च यो वेदभागोऽर्थज्ञानायापेक्षितस्तस्यैवाध्ययनमायाति, अन्यभागीयाध्ययनस्योपयोगाभावात्। गुरोः समीपे स्वशाखाध्ययनव्यापृतस्य बटोर्जन्मान्तरसंस्कारवशाद् यदि मुमुक्षा परिस्फुरति, तदा ब्रह्मविचाराय कर्मप्रतिपादकवेदभाग एवाध्येतव्यो ब्रह्मविचारोपयोगितत्प्रतिपादकभागो वा सकलो वेदो वा। नाद्यः, आनर्थक्यात्। अधीतस्योपयोगाभावादानर्थक्यम्। तृतीये पक्षेऽप्ययमेव दोषः। द्वितीयोऽपि न सम्भवति। सकलशास्त्रव्याकोपात्। उपनयनसंस्कृतस्य वटोः सकलशाखाध्ययनस्य प्रतिज्ञातत्वात्। 'अधीत्य स्नायादि'ति शास्त्रेण सकलवेदाध्ययनानन्तरमेव मधुमांसादिवर्जनादिसकलब्रह्मचारिधर्मत्यागपुरःसरमेव वेदार्थस्य विचार्यमाणत्वात्। किं वेदान्तविचारोऽपि तथैव भवति, न, तथाऽनिष्टत्वात्। विचारानन्तरं गुरुगेहत्यागो दारपरिग्रहश्च धर्मानुष्ठानाय विहितः। दारपरिग्रहश्च नित्यनैमित्तिकानुष्ठानाय मुमुक्षुभिरप्यपेक्षणीय एव। अन्यथा तदकरणजन्यप्रत्यवायस्यापरिहरणीयतया नरकनिवसतिर्दूषितकुल्यातटवसतिरिव प्रसज्येत। न च नित्यनैमित्तिकाकरणजन्यप्रत्यवायस्य मुमुक्षुव्यतिरिक्तविषयतेति वाच्यं, तत्र प्रामाणाभावात्। प्रत्युत मुमुक्षुभिरप्यवश्यकर्तव्यतैव तयोः प्रतिपाद्यते शास्त्रेण। तथा च मन्त्रवर्ण आह[1] —

'कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः'। इति।

सकलशास्त्रतत्त्वदर्शी खलु भगवान् वासुदेवोऽप्याह[2] —

'यज्ञो दानं तपश्चैव न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्'।। इति।

एवं न कथमपि वेदाध्ययनानन्तरं धर्मजिज्ञासा त्यक्तुं शक्यते मुमुक्षुभिः।

---

१. ईशावास्योपनिषदि; २. श्रीमद्भगवद्गीतायाम्, १८ तमेऽध्याये।

सर्वविधफलभोगविरागशमदमादिमुमुक्षाविधुरैरपि वा वेदार्थभूतस्य ब्रह्मणो जिज्ञासा। अन्यथा सकलवेदाध्ययनस्यानर्थक्यं प्रसज्येत। एवं तर्हि धर्मब्रह्मोभयप्रतिपादक-सकलवेदाध्ययनानन्तर्यविवक्षायां कथं जैमिन्यृषिणा धर्मस्यैव जिज्ञासा प्रतिज्ञाता न ब्रह्मण इति शङ्काकलङ्ककुत्सितभारः शिरसि पतेत्। मैवं वोचः, जैमिन्यृषिणा सकलस्यैव वेदार्थस्य जिज्ञासायाः प्रतिज्ञातत्वात्। 'अथातो धर्मजिज्ञासा' इत्यनेन धर्मस्यैव जिज्ञास्यता दृश्यते न ब्रह्मण इति दृष्टमपलपति भवान् ननु। न दृष्टमपलपामि। धर्मस्यैव जिज्ञास्यता न ब्रह्मण इति स्वीकरोम्येव। सकलस्य वेदस्य धर्माधर्मातिरिक्ते तात्पर्यविरहात्। अर्थाद् धर्माधर्मप्रतिपादक एव वेदः। तयोरेवानुष्ठानानुष्ठानयोरपेक्षितत्वात्। सिद्धस्य ब्रह्मणोऽननुष्ठेयत्वेनापेक्षाविरहात्। एवं तर्हि वेदान्तानामुपयोगाभावेनानुपयोगित्वलक्षणमप्रामाण्यं प्रसज्येत। नेति ब्रूमः। वेदान्तानां यथा प्रामाण्यं तथोपरिष्टाद् व्याख्यास्यामः। यत्तु वेदान्तविद्यानिष्णातैः कर्ममीमांसातो वेदान्तमीमांसाशास्त्रस्य पृथक्शास्त्रत्वं प्रतिपादयद्भिः श्रीमत् पारसनाथद्विवेदिमहाभागैरुच्यते[१] —

"वेदान्तमीमांसाशास्त्रं कर्ममीमांसातः पृथक् शास्त्रम्, अधिकारिविषय-प्रयोजनादिभेदाद् न्यायादिशास्त्रवत्। कर्मब्रह्ममीमांसयोर्नैकशास्त्रत्वम्, अधिकारिविषयप्रयोजनादिभेदाद् वा। कर्ममीमांसायाः स्वर्गकामोऽधिकारी, इह तु मुमुक्षुरिति"। तन्नातीवशोभते। कर्ममीमांसाया यद्यधिकारी स्वर्गकामस्तर्हि प्रतिष्ठाकामब्रह्मवर्चसकामपशुकामेन्द्रियकामग्रामकामस्वाराज्यकामादीनां तत्राधिकारिता न स्यात्, स्याच्च स्वर्गकामनाविशेषात् शूद्रादीनां यवनादीनामपि वा तत्राधिकारिता। यदि परं स्वर्गकामपदस्योपलक्षणत्वमङ्गीक्रियेत तदा शूद्रादीनां बौद्धजैनयवनादीनां वा तत्राधिकारो न निवारणीयो भवेत्। एवमेव यदि केवलं ब्रह्ममीमांसायां मुमुक्षुरेवाधिकारी स्यात्, तर्हि तथैव मुमुक्षासत्त्वे शूद्रादियवनम्लेच्छादीनामपि तत्राधिकारः स्यात्। न चैवमिष्यते। उभयत्रार्थज्ञानकामस्यैवाधिकारितायाः शास्त्रे निरूपणात्। वेदाध्ययनानन्तर्यबलाच्च त्रैवर्णिकानामेवार्थज्ञानकामानामिति निश्चीयते। अतो नोक्तदोषावतारोऽस्मिन् पक्षे। उपनीतानामध्ययनाधिकारात्, उपनयनस्य च त्रैवर्णिकमात्रविषयत्वात्। त्रैवर्णिकविषयत्वञ्च 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यमि'ति शास्त्रान्निश्चीयते। अत्र द्वितीयानिर्देशादुपनयनसंस्कृतत्रैवर्णिकानामग्रे कर्तव्यताविषयिण्याकाङ्क्षा जायते। उपनयनविधिसन्निधौ च 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनविधिना विधीय-मानस्याध्ययनस्य कर्तृविषयिण्याकाङ्क्षा जायते। एवमपेक्षासन्निधि-योग्यताभिर्निश्चीयते त्रैवर्णिकैरेवाक्षरग्रहणप्रणाडिकयाऽर्थज्ञानं सम्पादनीयमिति।

१. सारस्वतीसुषमायां 'वेदान्तमीमांसाशास्त्रारम्भणं युक्तमिति' निबन्धे, ५६ वर्षे १-२ अङ्कयोः।

एवञ्चोपनयनस्याध्ययनाङ्गत्वम्, प्रयोजनवदध्ययनकर्तृभूतमाणवकसंस्कारत्वात्। अध्ययनञ्चार्थज्ञानाङ्गम्, दृष्टार्थत्वात्। अर्थज्ञानस्य च केवललिङ्गादनुष्ठानाङ्गत्वमिति पूर्वमेवोक्तम्। एतत् सर्वमुक्तं शास्त्रदीपिकायां पार्थसारथिमिश्रैः[१]। न्यायरत्नमालायामपि तैस्तथैवोक्तम्—'येन हि फलेनार्थज्ञानाख्येनेतिकर्तव्यताभूतो विचारः प्रयुज्यते' इति, 'अर्थज्ञानाख्यं हि कार्यान्तरं साधयतोऽध्ययनस्य विचारोऽङ्गमिति' च।

एवं प्रयोजनवदर्थज्ञानकामस्यैवोभयत्राधिकारिताया निर्णीतत्वाद् यद् द्विवेदिमहाभागैः कर्ममीमांसायां स्वर्गकामस्य ब्रह्ममीमांसायाञ्च मुमुक्षोरधिकारित्वं प्रतिपादितं तन्न्यायानाकलननिबन्धनम्।

अपि च स्वर्गकामो यागादिष्वधिकारी। 'ज्योतिष्टोमेन स्वर्गकामो यजेत, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्येवमादि-विधिभिस्तथाऽवगतत्वात्। तत्रापि न तथैव, शूद्रादेरप्यधिकारप्रसङ्गात्।

अहो खलु दोषदर्शी भवान्। मीमांसायां स्वर्गादिकामस्याधिकारो मा भूत्। न्यायविरोधादित्यङ्गीकुर्मः। यागादिषु स्वर्गकामादेरधिकारमपलपति भवान् यो हि साक्षाद् विधिभिरेवावगम्यते। नूनं मात्सर्यग्रहग्रस्तो भवान्। मैवं वादिषुः। न्यायमालोच्यैव मयैवमुच्यते। 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिबलादेव तथा निश्चयो यथाऽहं ब्रवीमि। यद्यध्ययनविधिर्न स्यात् तर्हि ज्योतिष्टोमादिशास्त्राणि बाहुल्येन वर्तमानतयाऽविद्वांसमेव यागादिष्वधिकुर्युः। विद्यामन्तरेणानुष्ठानासम्भवस्य न्यायलभ्यत्वेन तान्येव शास्त्राणि विद्यामाक्षिपन्ति सन्ति विशेषाभावादेव चतुरो वर्णानधिकुर्युः। एवं सति शूद्रादेरनिवारणीयोऽधिकारो भवेत्। सति त्वध्ययनविधौ पूर्वोक्तप्रकारेण त्रैवर्णिकानामेवाध्ययनविधिसिद्धविद्यावतामधिकारो न शूद्रादेरिति निश्चीयते। तथा ह्युक्तं पार्थसारथिमिश्रैः[३]—

'एवञ्च त्रैवर्णिकेषु विद्वत्सु लब्धेषु नाग्निहोत्रादिविधयश्चतुर्थवर्णस्य विद्यामाक्षिपन्ति, किन्तु त्रैवर्णिकानेव विदुषोऽधिकुर्वन्ति' इति।

एवमेवाग्निसाध्यकर्मस्वाधानविधिसिद्धाग्निमत्ताऽप्यपेक्ष्यते तथा सामर्थ्यमपि काम्यकर्मसु। प्रयोगविधिनाऽङ्गवाक्यैकवाक्यतापन्नप्रधानविध्यात्मकेन साङ्गप्रधान-कर्मकर्तुरेवाधिकारबोधनात्। असमर्थस्य च तत्राधिकाराभावात्। अतो न केवलस्वर्गकामादेरेवाधिकारः कर्मसु।

---

१. शास्त्रदीपिकायां जिज्ञासाधिकरणे।

२. न्यायरत्नमालायां प्रयुक्तितिलके, १४ तथा १६ पृष्ठे।

३. शास्त्रदीपिकायां जिज्ञासाधिकरणे।

एतेन मधुसूदनसरस्वतीपादैः[१]—'तस्मान्न स्वाध्यायविधिप्रयुक्तो विचारः, किन्तूत्तरक्रतुविधिप्रयुक्त इति यथा तथा श्रवणादिविधिप्रयुक्त एव ब्रह्मविचारोऽपि भविष्यतीति को विरोधः' इति यदुक्तं तत् सर्वं पूर्वोक्तेनैव न्यायेनाऽनर्थापत्तेर्निराकृतं वेदितव्यम्। श्रवणादिविधिप्रयुक्त एव ब्रह्मविचारो भविष्यतीति वचनं स्वसिद्धान्तविरोधादेवापास्तम्। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो निदिध्यासिव्यश्चेति वाक्यं न विधित्वेनाङ्गीकृतं वेदान्तिभिरेव। विधिसरूपाण्येतानि वाक्यानि न विधय इति वेदान्ताकरग्रन्थेषूक्तत्वात्। अपि च विधित्वेऽपि 'द्रष्टव्यः श्रोतव्यः' इति वचनाभ्यां न दर्शनपदवाच्यज्ञानस्य श्रवणस्य वा विधिः सम्भवति। तयोरध्ययनविधिनैव प्राप्तत्वाद् विधित्वायोगात्। अतो निदिध्यासनपदवाच्यस्य ध्यानस्यैव विधिरिति श्रीभाष्ये भगवद्रामानुजैरुक्तत्वात्। एवं सति श्रवणादिविधि-प्रयुक्तो ब्रह्मविचार इति कथनं धूलिप्रक्षेपन्यायमावहति।

यत्तु तैरेवाग्रे[२]—'इष्टसाधनताविधिपक्षेऽपि कस्येष्टस्य साधनमध्ययनमित्य-पेक्षायामक्षरग्रहणस्यैवाकाङ्क्षापूरकत्वे नान्यफलकल्पनावकाशः' इति यदुक्तं तत्रा-द्वैतमतरसिकतैव हेतुर्न तु न्यायपर्य्यालोचनम्। अन्यथा कथमिव तेऽध्ययनापरपर्य्यायस्याक्षरग्रहणस्याध्ययनेष्टत्वं वदेयुः। एवमध्ययनमर्थज्ञान-रूपस्यैवेष्टस्य साधनमित्यकामेनाप्यङ्गीकर्तव्यम्। तस्यैव दृष्टरूपत्वात्। दृष्टे सम्भवत्यदृष्टकल्पनस्यान्याय्यत्वात्। अपि च ते नियोगविधिपक्षेऽध्ययननियोगस्य नियोज्याभावात् स्वविषयाननुष्ठापकत्वं प्रतिपादयन्तः प्राभाकरपक्षमङ्गीकुर्वन्ति। तथा कुर्वन्तस्तेऽध्यापनविधावपि नियोज्याभावात् स्वविषयस्यैवाननुष्ठापकत्वेन तत्प्रयुक्ताध्ययनानुष्ठापकत्वस्य दूरतो निरस्तत्वेनाऽध्ययनविधावर्थज्ञानकामरूपस्य नियोज्यस्यावश्यकल्पनीयत्वाद् अध्ययनविधिप्रयुक्तस्याध्ययनस्य सिद्धेर्न स्वेष्टं साधयितुं क्षमा भवेयुः। एवमेव भावनावादेऽपि तेऽध्ययनकरणिकाया भावनायाः स्वाध्यायस्य भाव्यत्वं मीमांसासम्मतमेव ख्यापयन्तोऽनिच्छन्तोऽपि प्रयोजन-वदर्थज्ञानसाधनत्वमध्ययनस्य स्वीकुर्वन्त्येव। अन्यथा भामतीग्रन्थेनैव तेषां दृढतरो विरोधः स्यात्। इत्थं सिद्धं तावदर्थज्ञानकाम एव यथा कर्ममीमांसायामधिकारी तथैव ब्रह्ममीमांसायामपीति अधिकारिभेदाभावान्न कर्ममीमांसातो भिन्नं ब्रह्ममीमांसाशास्त्रमिति। एतेन द्विवेदिमहाभागानां 'न चैकपुरुषे उभयोः शास्त्रयोरधिकारिता सम्भवती'त्यादिप्रतिपादनप्रकारः परक्लेशापादक एव। एकशास्त्रत्वाभ्युपगमात्। एकस्मिन् शास्त्रे सम्भवत्येवैकस्य पुरुषस्याधिकारिता। यदि पुरुषस्य परा विरक्तिः स्यात्, तर्हि मा कार्षीत् स काम्यं कर्म। नित्यनैमित्तिकयोः समाचरणे को विरोधः। तयोरल्पास्थिरफलत्वाभावात्।

---

१. अद्वैतरत्नरक्षणे शास्त्रारम्भोपपत्तौ। २. तत्रैव।

यत्तु तैरेव[१]—'न चैक एवाधिकारी फलस्वाम्यभाक् 'स्वाध्यायोऽध्येतव्यः' इत्यादिना वेदाध्ययने नियुक्तः कृताक्षरग्रहणापाततोऽर्थग्रहणरूपाध्ययनः स एव धर्माख्यविधिनिषेधात्मककर्मावबोधे 'अथातो धर्मजिज्ञासे'त्यादिशास्त्रेण नियुक्तः स एव सम्यक्कर्मावबोधपूर्वकं कृतानुष्ठानः कर्मफलेष्वसारतामनुसन्दधानः, अत एव विरक्तो मोक्षकामो ब्रह्मजिज्ञासायां नियुक्त इति वाच्यमि'ति यदुक्तं तदपि न्यायासमीक्षणनिमित्तम्। अत्र 'कृताक्षरग्रहणापाततोऽर्थग्रहणरूपाध्ययनम्' इति पदं पूर्वं समीक्षणीयम्। तत् पदद्वयमस्ति एकं वा पदम्। यद्येकं पदं तर्हि को विग्रहः? कृतमक्षरग्रहणं येन स कृताक्षरग्रहणः, आपाततोऽर्थग्रहणरूपमध्ययनं यस्य स आपाततोऽर्थग्रहणरूपाध्ययनः, कृताक्षरग्रहणश्चासावापाततोऽर्थग्रहणरूपाध्ययनः स कृताक्षरग्रहणापाततोऽर्थग्रहणरूपाध्ययन इति प्रतिभाति। तत्र 'आपातत' इति पदं कामिनीद्वयेनालिङ्ग्यमानं भल्लूकशरीरमिव नूनं चेतोविक्षोभं जनयति। यदि पदद्वयं तर्हि कृतश्च तदक्षरग्रहणं तेनापातत इत्येकं पदं तथा अर्थग्रहणरूपाध्ययन इत्यपरं पदमिति प्रतिभाति। अत्राप्यक्षरग्रहणपदेन आपातत इति पदस्य समासः काञ्चनपुटके धृतं कुचीवरमिव नातीव शोभामावहति।

अपि च अक्षरग्रहणरूपाध्ययनेन आपाततो योऽर्थः प्रतिभाति तद्ग्रहणे सत्येव धर्माख्यविधिनिषेधात्मककर्मावबोधे शास्त्रेण पुरुषो नियुज्यत इति द्विवेदिपादानामभिप्रायो विवक्षितोऽस्ति। स चाभिप्रायो न तदीयेन वाक्येन सम्यक् परिस्फुरति, तत्स्फुरणेऽपि परस्परविरोधो धर्मनिरपेक्षत्वतत्सापेक्षत्ववादिनोरिव हृदयतलमाविशति। तथा हि—अर्थग्रहणमित्यनेनार्थज्ञानमेव वक्तुं शक्यते नान्यत् किञ्चन। अर्थज्ञानञ्चाक्षरग्रहणरूपस्याध्ययनस्य फलं भवति, न तु तदध्ययनमेव। अतोऽर्थग्रहणरूपाध्ययन इति कथनं विरुद्धमेव। पुनश्चापाततो यस्यार्थज्ञानं जातं स एव कर्मावबोधरूपार्थज्ञाने शास्त्रेण नियुज्यत इति कथनमपि तथैव विरुद्धम्। येनाक्षरग्रहणं कृतं स एव नियुज्यतेऽर्थज्ञाने नान्यः। 'धर्माख्यविधिनिषेधात्मककर्मावबोधे' इत्यनेन विधिनिषेधात्मकं यत् कर्म तदेव धर्माख्यं भवति, तस्यावबोधे इत्यर्थविवक्षाऽस्ति। सा च नोपपद्यते। कथम्? विधिनिषेधौ धर्माधर्मयोः प्रमाणमित्येव चोदनालक्षणे प्रतिपाद्यते। अतो विधिनिषेधगम्यौ धर्माधर्मौ न तु तावेवेति सुव्यक्ताऽनुपपत्तिः।

यद्यपि तैरुक्ताशङ्कानिवारणायाग्रे[२]—'बहुशो विरोधात्। तथा हि—वेदाध्ययनं ततः कर्मावबोधस्ततः कर्मानुष्ठानं ततो ब्रह्मजिज्ञासेति क्रमोऽभिहितः। तस्मिन् यदि कार्यकारणभावस्तर्हि तन्नोपपद्यते—कर्मावबोधे सत्यपि ब्रह्मजिज्ञासा न दृश्यते,

१. सारस्वतीसुषमायां प्रकाशिते वेदान्तमीमांसाशास्त्रारम्भणं युक्तमिति निबन्धे, १४ पृष्ठे।
२. तत्रैव निबन्धे।

असत्यपि कर्मावबोधे ब्रह्मजिज्ञासा दृश्यते। अत: कार्यकारणभाव: कर्मब्रह्ममीमांसयोर्नास्ति। यत्रापि कर्मावबोधानन्तरं ब्रह्मजिज्ञासा जायते, तत्र न तदेव हेतुरपि तु कर्मफलस्वर्गादेरनित्यत्वावगम एव। कर्मावबोधे सम्पन्ने ब्रह्मजिज्ञासा कर्तव्या इति, यदि अथातो ब्रह्मजिज्ञासेत्यस्यार्थस्तदा न व्यर्थतैवास्य वाक्यस्य स्यात्, कर्मावबोधस्य जिज्ञासाया अप्रयोजकत्वा'दित्युक्तं तदपि गन्धर्वनगरे स्वकीयभवननिर्माणमिव प्रतीयते। तथा हि—उक्तस्य क्रमस्यानङ्गीकारादेव। वेदाध्ययनानन्तरमेव ब्रह्मजिज्ञासाया जायमानत्वात्। सकलस्य वेदस्याध्ययनस्य भगवत्पादसम्मतत्वात्। यो हि स्वशाखान्तर्गतामुपनिषदमधीतवान् कथमिव तस्योपनिषदर्थभूतस्य ब्रह्मणो जिज्ञासा न जायेत। तज्जिज्ञासाकारण-भूतोपनिषदध्ययनस्य पुर:स्फूर्तिकत्वात्। अपि च येन पुरुषेणोपनिषद् नाधीता तस्य मुमुक्षासत्त्वेऽपि ब्रह्मविषयकपरिचयाभावादेव न जायेत ब्रह्मजिज्ञासा। 'कर्मावबोधे सत्यपि ब्रह्मजिज्ञासा न दृश्यते' इति कथनमपि तेषां शिष्याणामेव मनांस्यावर्जयितुं क्षमम्। सति कर्मावबोधे तदनुष्ठानाय नित्यात्मभूतस्य ब्रह्मणो विचारस्या-पेक्षितत्वात्। अन्यथाऽऽत्मनिश्चयाभावात् को हि सचेता: कर्मणि प्रवर्तेत। अत: कर्मावबोधस्य ब्रह्मजिज्ञासाया: प्रयोजकत्वमपि नानुपपन्नम्।

यत्तु तैरेवाग्रे—'किञ्च कर्मावबोधानन्तरं कर्मानुष्ठानं स्यात्। न च शक्यं कर्मानुष्ठातुं तत् त्यक्तुञ्च सहैव। कर्मण्यनुष्ठाय स्वर्गार्थी स्वर्गफलं प्राप्नुयात्, न च ब्रह्म जिज्ञासेत। अथासक्तभावेन कर्मानुष्ठानं तच्च चित्तशुद्ध्यर्थमनुष्ठानमिव स्वर्गफलासाधकत्वादि'ति यदुक्तं तदन्तरात्मनि महान्तमाह्लादं जनयति। 'कर्मावबोधानन्तरं कर्मानुष्ठानं स्यादिति वचस्तु ब्रह्मावबोधानन्तरं ब्रह्मप्राप्तिवदेव। न हि कर्मावबोधानन्तरं तदनुष्ठानमत्यन्तमपेक्ष्यत एव। स्वर्गादिफलकामनाया अभावादेव। नित्यनैमित्तिककर्मानुष्ठानन्तु तदकरणजन्यप्रत्यवायपरिजिहीर्षया यद्यप्यत्यन्तमपेक्ष्यते, तथापि चित्तशुद्ध्यर्थत्वेन तदनुष्ठानमनुष्ठानमेव न भवतीति भवन्तो निगदन्ति। अत: कर्मावबोधानन्तरं कर्मानुष्ठानं स्यादिति वचो धूमवर्तिकया नि:सरन् धूम इव खे विलीयते। अनन्तरमेव चोपरितनं वचोऽपि तथैव। अपि च कर्मानुष्ठानायापेक्षितात्मभूतब्रह्मविचारस्य तेन सह विरोधाभावादेव सहानुष्ठानेऽपि न कश्चिद् विरोध:। कर्मानुष्ठानोपयोगिन एव ब्रह्मज्ञानस्योपनिषद्भिरस्माकमिष्टत्वात्। अतथाभूतस्य च शुद्धबुद्धमुक्तस्वभावसच्चिदानन्दानन्तात्मविषयकस्य ज्ञानस्यात्मन: स्तुत्यर्थत्वेनाङ्गीकारात्। तथाविधस्य ज्ञानस्यैव वाऽऽत्मसंस्कारकत्वेन स्वीकाराच्चेत्यास्तां तावत्। तस्मात् सिद्धमधिकारिभेदाभावादुभयोरेकशास्त्रत्वमिति।

एवं सकलस्यैव वेदस्य धर्माधर्मयोरेव तात्पर्यावसायाद् धर्माधर्मयोरेव प्रतिपाद्यत्वात् प्रतिपाद्यविषयभेदाभावादेव भवत्येकशास्त्रत्वम्। अत्र प्रसङ्गे

द्विवेदिमहाभागैः कर्ममीमांसाविषयत्वेन विधिनिषेधयोरेव धर्माधर्मप्रमाणयोर्धर्मत्वमुक्तं तत् प्रागेव निरस्तम्।

एवमेव प्रयोजनाभेदोऽपि तयोरस्ति। अत उभयोरेकशास्त्रत्वम्। एतेन 'कर्ममीमांसायाः प्रयोजनं कर्मज्ञानं तच्चानुष्ठानापेक्षं स्वर्गादिसाधकम्' इति द्विवेदिमहाभागानामुक्तिश्चातकमुखे स्वातीव्यतिरिक्तनक्षत्रीयजलबिन्दुवन्निरवकाशैव। कर्मज्ञानस्यानुष्ठानापेक्षत्वेऽपि काम्यवर्जनपुरःसरनित्यनैमित्तिकानुष्ठानद्वारा दुःखात्यन्तसमानाधिकरणमनःकरणकसुखभोगात्मकमोक्षसाधकत्वात्। न हि मीमांसकमते दुःखात्यन्तनिवृत्तिमात्रं प्रमातृत्वविगलनापरपर्यायजीवत्वात्यन्तसमुच्छेदरूपनिर्विशेषत्वापत्तिरूपो वा मोक्ष इति साम्प्रतम्। तन्मात्रस्य पुरुषाभिलाषविषयत्वाभावादपुरुषार्थत्वप्रसक्तेः। अस्मदुक्तस्य च सर्वजनाभिलषणीयतया पुरुषार्थत्वोपपत्तेः। न च मीमांसकसम्मतो नासौ मोक्ष इति वाच्यम्। श्रीमद्वार्तिकग्रन्थपर्यालोचनया तथाविधस्यैव मोक्षस्य वार्तिककारसम्मतत्वेन दृढनिश्चयात्। उक्तमपि[१] —

'दुःखात्यन्तसमुच्छेदे सति प्रागात्मवर्तिनः।
सुखस्य मनसा भुक्तिं मुक्तिमाहुः कुमारिलाः'।। इति।

एतेन मीमांसाशास्त्रे स्वर्ग एव क्षयिष्णुः पुरुषार्थो न मोक्ष इति मुक्तलज्जं प्रतिपादयन्तो दूरतो निरस्ताः। मीमांसाशास्त्रे मोक्षस्यापुरुषार्थत्वे यावज्जीवाधिकरणविरोधः स्यात्[२]। यावज्जीवाधिकरणे हि 'यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'त्येवमादि 'अग्निहोत्रं जुहुयात् स्वर्गकामः, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादि-काम्यप्रयोगानन्तरमाम्नातं वाक्यमुदाहृत्य विचार्यते—किमयं यावज्जीविको विधीयमानो धर्मो कर्मार्थोऽभ्यास उत नियमः पुरुषार्थः? इति। तत्र कर्माङ्गविधौ कर्मणः कथम्भावाकाङ्क्षापरिगृहीतत्वात् प्रकरणानुग्रहस्य सत्त्वात्, पुरुषार्थविधौ तु प्रकरणबाधापत्तेरभ्यासविधिरेव। एवञ्च यावज्जीवमग्निहोत्रादेरभ्यासः कार्यः। ततश्च व्याप्यप्रयोगव्यासक्तव्यापकप्रयोगादेव स्वर्गाद्येव फलमिति प्राप्ते—न यावज्जीविकाभ्यासविधिः सम्भवति। लक्षणाप्रसक्तेः। जीवनवाचिना यावज्जीवपदेन हि तत्सम्बद्धकाललक्षणा यजिना च यागाभ्यासलक्षणा स्यात्। प्रकरणवशेन श्रुतेर्लक्षणार्थताया अन्याय्यत्वात्, जीवने निमित्ते प्रयोगान्तरमेव विधीयते फलान्तराय। यावद्विनिपातञ्च जीवनस्य नियतत्वाद् नियतनिमित्तकत्वेन पुरुषार्थो

१. मानमेयोदये।

२. जैमिनीये, २।४, अधि. १।

नियमो विधीयत इति सिद्धान्तितम्। अत्रानियतनिमित्तकत्वेन नैमित्तिकत्वाङ्गीकारेण नित्यनैमित्तिकयोर्व्यवस्थोपपद्यते। एवं सति काम्याद् नित्यनैमित्तिकयोर्भेदे सिद्धे न स्वर्गाद्येव फलं कल्पयितुं युज्यते। मुमुक्षुभिरप्रार्थितत्वात्। अवश्यकर्तव्यता तु विधिवशात् तेषामपीति फलमवश्यं कल्पनीयम्, अन्यथा भावनाया अपुरुषार्थभाव्यकत्वेन विधेरप्रवर्तकत्वापत्तेः। अतोऽत्र विश्वजिन्न्यायावताराभावाद् 'धर्मेण पापमपनुदति' इत्यादिवाक्यशेषबलेन रात्रिसत्रन्यायेन तत्करणे पापक्षय एव फलं कल्प्यत इति केचनाऽऽचार्या आहुः। एतन्मतमेव युक्तमिव प्रतिभाति। अत्र प्राभाकरा विधेयाकरणस्य प्रत्यवायापादकत्वेऽपि तत्करणस्याफलत्वमङ्गीकुर्वते। न्यायसुधाकारास्तु भावनाया भाव्याकाङ्क्षायां तदकरणनिमित्तकप्रत्यवाय-प्रागभावपरिपालनमेव भाव्यत्वेन सम्बद्ध्येत इत्याहुः। पूर्वोक्तमते वाक्यशेषानुग्राहकत्वमेव विशेषः।

पापक्षयस्य मोक्ष एवोपयोगो न चित्तशुद्धौ, प्रमाणाभावात्। प्रस्तुतज्ञानस्यैव चित्तशुद्धावुपयोगः, औचित्यात्। शुद्धचेतसाऽनुष्ठीयमानस्यैव कर्मणः फलजनकत्वस्य 'यदेव विद्यया करोती'त्यादिशास्त्रेण बोधितत्वात्। भवतु वा चित्तशुद्धावेवोपयोगः कर्मणाम्। न चैतावता मोक्षजनकत्वविरोधः। चित्तशुद्धिद्वारा ब्रह्मज्ञानसंस्कृतपुरुषेणाऽनुष्ठीयमानस्य तस्य मोक्षजनकत्वोपपत्तेः। मोक्षोत्पत्तौ काम्यनिषिद्धवर्जनमप्यपेक्ष्यत इत्यन्यदेतत्। उक्तमेव—

'वेदोदितानि कर्माणि कुर्यादीश्वरतुष्टये।
यथाश्रमं त्यक्तकामः प्राप्नोति परमं पदम्।।
काम्यं विषयभोगार्थमिहामुत्र प्रयुज्यते।
मोक्षाय सुकृतं विद्धि ब्रह्मार्पणधिया कृतम् ।।' इति।

भगवानपि वासुदेव आह[१]—

'कर्मणैव हि संसिद्धिमास्थिता जनकादयः।
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्'।। इति।

एतेन 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः', 'तद् यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते', 'नास्त्यकृतः कृतेन' इत्यादिश्रुतिभिस्तथा—

---

१. श्रीमद्भगवद्गीतायाम्।

'ज्ञानग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन।
कर्मणां परिणामित्वादाविरिञ्चादमङ्गलम्।।'

इत्यादिस्मृत्या च कर्मणां यन्निषेधः प्रतीयते तत्तु केवलकर्मणां निषेधो न तु ज्ञानदीपितकर्मणामित्येवाङ्गीकर्तव्यम्। ज्ञानदीपितकर्मणान्तु निःश्रेयसजनकत्वमविरुद्धम्। अस्मिन् पक्षे श्रीमदभिनवगुप्तपादाचार्या अप्यनुकूलाः। तथा हि तैः—

'श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परन्तप।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते।।'

इति श्रीमद्भगवद्गीताटिप्पणे—'द्रव्यमयात् केवलाद् द्रव्याज् ज्ञानदीपितो यज्ञः श्रेयान्, केवलत्वञ्च मयटा सूच्यते। यतः सर्वमखिलं कर्म ज्ञाने सत्येव परिसमाप्यते'। इत्यभिहितम्। एवं सिद्धं कर्मभिरेव मोक्षः, कर्मानुष्ठानाय चोपनिषज्जन्यज्ञानेनाऽऽत्मसंस्कारोऽपेक्ष्यत इति। एवं सति याः सन्ति ज्ञानफलश्रुतयस्ताः सर्वा अपि '[1]द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्या'दिति न्यायेन ज्ञानस्तुत्यर्थमर्थवादरूपाः। सिद्धमित्थमधिकारिविषयप्रयोजनभेदाभावान्न पूर्वोत्तरमीमांसयोर्भिन्नशास्त्रत्वमिति। एवञ्च शास्त्रैकत्वसाधनेऽधिकारिविषयप्रयोजनाभेदरूपस्य नोपाधित्वं न च भेदानुमानेन सत्प्रतिपक्षितत्वम्।

एतेन 'एवञ्च कर्तृभेदात् पूर्वोत्तरकाण्डनिबन्धनत्वात् कर्मब्रह्ममीमांसाशब्दव्यवहारविषयत्वाच्चानेकहेतुभिर्नैकशास्त्रत्वं सिद्ध्यती'ति श्रीमद्द्विवेदिपादोक्तिः स्वयमेव प्रवाते निहितं कर्पूरमिव प्रविलीयमाना न हृदयपुण्डरीकमधिवसति। कर्तृभेदादेः शास्त्रभेदेऽप्रयोजकत्वात्।

यत्तु तैरेवाग्रे—'न च अथातो धर्मजिज्ञासेत्यनेन धर्मशब्देन वेदार्थमात्रस्योपलक्षणाद् ब्रह्मजिज्ञासाया अपि तेनैव गतार्थत्वं युक्तमिति वाच्यम्, एवं सति वेदार्थमात्रजिज्ञासां प्रतिज्ञाय सिद्धब्रह्मबोधकवाक्यानां मीमांसासूत्राणि अरचयतां परमर्षीणां जैमिनीयानामन्यायत्वापत्तेः। न च ते तत्रभवन्तः प्रारम्भे वेदार्थजिज्ञासां प्रतिज्ञाय ब्रह्मप्रतिपादकवाक्यमीमांसां विस्मरेयुः। अतो ब्रह्ममीमांसा अप्रतिज्ञातैव महर्षिणेत्येव कल्पना ज्यायसी, अन्यथा वेदार्थजिज्ञासेत्येव सूत्रयेत्' इत्युक्तम्, तत्तु शब्दजालेनैव प्रमुग्धमानसानां मीमांसान्यायविरहितस्वान्तानामेव चेतोभूमौ चमत्कृतिकन्दोत्पादनायालम्।

---

१. जैमिनीये, ४।३, अधि. १।

सकलस्यैव वेदस्य धर्म एव तात्पर्यात् तस्यैव वेदार्थत्वात्। न च भगवाञ्जैमिनिर्वेदार्थजिज्ञासां प्रतिज्ञाय ब्रह्मप्रतिपादकवाक्यमीमांसां विस्मृतवान्। यदि स भगवान् विस्मरेद् ब्रह्मवाक्यमीमांसां कथं गुरुर्बादरायणः—'शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः'[१] इति तदीयं मतमुपस्थापयेत्। शारीरकमीमांसायां यत्र तत्र जैमिनिमतोल्लेख एवोपनिषदर्थविषयकविचारस्य प्रतिज्ञातत्वं महर्षेर्जैमिनेर्व्यनक्ति।

नन्वेवं विधिप्रतिषेधयोः साध्यसाधनेतिकर्तव्यताविशिष्टभावनाविषयक-विधिप्रतिषेधप्रतिपादकत्वादर्थाच्च तद्विषययागकलञ्जभक्षणादेरिष्टानिष्टसाधनताक्षेपाद् धर्माधर्मप्रमितिजनकत्वेन प्रामाण्योपपादनेऽपि सिद्धब्रह्मबोधकवाक्यानां कथमपि भावनान्तर्गतेः सम्भवाभावाद् विधिप्रतिषेधापेक्षाविरहतयाऽप्रामाण्यमेवानुपयोगित्व-लक्षणमापद्येतेति चेत्, न, अर्थवादाधिकरणन्यायेनैवोपनिषदामपि भावनोपयोगि-पदार्थसमर्पणतया प्रामाण्योपपत्तेः। तत्र हि विध्यर्थवादमन्त्राणामेवापौरुषेयतया प्रामाण्यस्य पूर्वाधिकरणे[२] स्थापितत्वे फलतोऽपि प्रामाण्यं स्थापितम्। यथोक्तं वार्तिककारमिश्रैः[३] —

'सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः।
विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते'।। इति।

यद्यपि विधेरेव प्राधान्येन प्रवृत्तिकारणत्वं तथापि तस्यैवाऽर्थवाद-बोधितप्राशस्त्यज्ञानमनुग्राहकत्वेनाङ्गीक्रियते। स्वभावमनोहरे तावत् पुरुषाणामभिलाषविषयता फले स्वत एव भवति। एवं तत्साधने तेषां स्वतो द्वेषसत्त्वेऽपि प्रवृत्तिः फलमभिप्रेत्यैव भवति। इष्टसाधनताज्ञानमपि फल एव रुचिसम्पादनद्वारा तत्साधनप्रवृत्तिहेतुर्भवति। तत्तु पुरुषरुचिसमुत्पादनाय गुणकथनमपेक्षते। एवं सति पुरुषप्रवर्तनाय विधेः प्राशस्त्यापेक्षा तथाऽर्थवादानामपि स्वाध्यायविधिवशादेव प्रयोजनापेक्षेति विधिना सहैककार्यकारित्वाद् विधिवदेवाऽर्थवादानां प्रामाण्यं सिद्ध्यति। एवमेव प्रमादालस्यसत्त्वेऽर्थवाद-बोधितप्राशस्त्यज्ञानं विना विधिर्यथा बह्वायासव्ययसाध्ये दुःखाकरे कर्मणि पुरुषान् प्रवर्तयितुं न भवति क्षमस्तथैवोपनिषद्बोधितशरीरादिव्यतिरिक्तनित्यात्मज्ञानं विनाऽपि। को हि नाम देहाद्यव्यतिरिक्तमात्मानं जानन् दृश्यमानदेहानुपभोग्यफलके कर्मणि प्रवर्तेत। नूनं प्रवर्तेत दृश्यमानदेहोपभोग्यफलके कर्मणि यथा

---

१. ब्रह्मसूत्रम्, ३।४, सूत्रम् २।
२. वेदापौरुषेयत्वाधिकरणे, १।१ अधि.।
३. मीमांसादर्शने, १।२।१ सूत्रे तन्त्रवार्तिके।

प्रवर्तन्तेऽधुनाऽत्रभवन्तोऽध्यापकाः कर्मचारिणोऽधिकारणिश्च। आत्मनो देहादिव्यतिरिक्तनित्यरूपता च समर्प्यते 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्राऽसंसर्गस्त्वस्य भवती'त्याद्युपनिषद्भिः। अत्र मात्राशब्देन भूतेन्द्रियधर्माधर्माभिधानात् शरीरादिव्यतिरिक्तसंसारिकर्तृभोक्तृनित्यात्मप्रतिपादनपूर्वकेण 'आत्मा वा अरे द्रष्टव्यः' इत्यात्मज्ञानविधिनाऽऽक्षिप्तभावनायाः प्रयोजनाकाङ्क्षायां फलाश्रवणादेव 'दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वाद् योग्यतया कर्मप्रवृत्तिसिद्धिरेव गृह्यते'। एवं तावत्—सिद्धमात्मज्ञानस्य क्रत्वर्थत्वम्। उक्तमेव वार्तिककारपादैः[1]—

'आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितम्।
कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते।।
विज्ञाते चास्य पारार्थ्ये यापि नाम फलश्रुतिः।
साऽर्थवादी भवेदेव न स्वर्गादिः फलान्तरम्'।। इति।

क्रतुविध्यनपेक्षिताऽऽत्मप्रतिपादिकानाम्—'अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इत्यादिप्रकाराणां श्रुतीनामात्मस्तुतिमात्रप्रयोजनकत्वमेव। न तु स्वतन्त्रफलकत्वं तासां पारार्थ्येन स्वतन्त्रफलकत्वाभावात्। यथाहुर्वार्तिककारमिश्राः[2]—

'एतेन क्रत्वर्थकर्तृप्रतिपादनद्वारेणोपनिषदां नैराकाङ्क्ष्यं व्याख्यातम्' इति। सर्वथा सर्वेषामेव वेदानामंशत्रयविशिष्टभावनायामेव तात्पर्यावसायात् तद्विषयकविधिप्रतिषेधप्रतिपादकत्वेनांशत्रयप्रतिपादकत्वेन वा भावनायामेवोपयोगसम्भवात् प्रामाण्यं भवति। न तु तद्व्यतिरिक्तविषयप्रतिपादकत्वेन कस्यापि वेदभागस्य प्रामाण्यमिति मीमांसकसरणिः।

नन्वेवं तर्हि वेदान्तमीमांसाशास्त्रारम्भणं न कर्तव्यं भवति। जैमिनिनैव सकलस्यैव वेदार्थस्य विचारितत्वादिति महर्षेर्बादरायणस्य सकलोऽपि प्रयासो धर्मनिरपेक्षराष्ट्रे त्रयीमार्गव्यवस्थापनमिव लोभाकृष्टमानसे वैराग्याङ्कुरोत्पादनमिव शास्त्रपरिचयशून्याध्यापके शास्त्राध्यापनप्रवर्तनमिव पदार्थावबोधमात्रेण निःश्रेयसाधिगमनमिव यतिवृन्दपूरिते मठे शान्त्युद्भावनमिव क्लेशलाभमात्रप्रयोजनः स्यात्। न चैवं युज्यते। अधिगतसकलशास्त्रतत्त्वाभासस्त्रिकालदर्शी सकललोककल्याणकामो महर्षिर्बादरायणो न खलु निष्प्रयोजनमेव

---

१. श्लोकवार्तिके सम्बन्धवार्तिके।

२. तन्त्रवार्तिके, १।२।७ सूत्रे।

वेदान्तमीमांसाशास्त्रारम्भणं विदध्यात्। न च श्रीमद्भगवत्पादप्रभृतयो महापुरुषा भाष्यादिकं विरचयेयुः, पठेयुश्च तन्मार्गानुसारिणः शिष्याः। अतः प्रयोजनवदेव वेदान्तमीमांसाशास्त्रमिति स्वीकर्तव्यम्। प्रयोजनवत्ता च तस्य सिद्धेऽपि ब्रह्मणि वेदस्य तात्पर्यं विना न सम्भवतीत्यायातं तर्हि वेदान्तानां निरस्तसकल-भेदनिर्विशेषप्रत्यगात्मचैतन्यरूपब्रह्मावबोधकत्वम्, तेन चाविद्यानिवृत्तिरूप-निःश्रेयसाधिगतिः। पृथक्शास्त्रत्वमपि तेन पीयूषपरिपूरितकाञ्चनकंस इव हठादधस्तलमधितिष्ठति। तथा च न भवदिष्टसिद्धिरिति चेत्, न।

न खलु महर्षिबादरायणकृतारम्भश्रीमद्भगवत्पादकृततद्भाष्यतन्मतानुसारि-कृतानुशीलनमात्रेण वेदतात्पर्यमन्यथयितुं युक्तं तेन चाक्लृप्तं प्रयोजनविशेषं कल्पयितुम्। न हि पदार्थानुष्ठानयोग्ये सर्वथा भावनातदंशव्यतिरिक्तेऽर्थे वेदानां तात्पर्यं सम्भवति। अध्ययनविधिना च सकलस्यैव वेदस्य प्रयोजनवदर्थपर्यवसायित्वं बोधितम्। अतस्तद्वशेनोपनिषदां यथा प्रयोजनवत्ता सिद्ध्येत्, तथैव कल्पना ज्यायसी न तद्व्यतिरेकेण। यादृशमात्मज्ञानं कर्मप्रवृत्तिसिद्ध्यर्थं भावनयाऽपेक्ष्यते तादृग्रूप एवाऽऽत्मोपनिषद्भिः समर्प्यते. न भवदिष्टनित्यशुद्धबुद्धमुक्तस्वभावरूपः। कर्मणि प्रवृत्तौ तादृगात्मविषयक-ज्ञानस्याऽनपेक्षितत्वात्।

एवं सिद्धं पारार्थ्यान्नोपनिषज्जन्यात्मज्ञानस्य पृथक्प्रयोजनकत्वमिति वेदान्तमीमांसाशास्त्रस्यानारम्भणीयतैवाऽऽयातीति। यश्चारम्भो विहितो महर्षिबादरायणेन स कृत्त्वाचिन्तान्यायावलम्बनेनैव शिष्यबुद्धिवैशद्यमात्रप्रयोजनकः। कृत्वाचिन्तया विचारश्च दृश्यते मीमांसायामपीति न कोऽपि विरोधः। पूर्वपक्ष एव संशयमुपन्यस्य पुनः पूर्वोत्तरपक्षाभ्यां यो विचारः, स एव कृत्वाचिन्तान्यायः। सिद्धेऽपि वेदतात्पर्यमस्तीति मीमांसाशास्त्रीयपूर्वपक्षे सिद्धान्तयुक्तिभिर्निरस्ते सति यदि सिद्धेऽपि तात्पर्यं स्यात्, तर्हि उपनिषदां किं जीवे, ईश्वरे, ब्रह्मणि वा तात्पर्यमिति विचारः कृत्वाचिन्तयैव। एवं तेन न्यायेनावश्यमेव वेदान्तमीमांसाशास्त्रारम्भणं युक्तमिति।



# भारतीयदर्शनेषु पुनर्जन्मसिद्धान्तः

**डॉ॰ धर्मेन्द्रकुमारसिंहदेवः**
शोधसहायकः, संस्कृतविभागस्य
डॉ॰ हरीसिंहगौरविश्वविद्यालये
सागरम् (म.प्र.)



भारतीयदर्शनेषु कर्मिणां मनुष्याणां कृते पुनर्जन्मव्यवस्था प्रतिष्ठापिता वर्तते। अपवादरूपेण चार्वाकाः खल्वात्मनः सद्भावं नैव स्वीकुर्वन्ति। अतः परलोकस्य पुनर्जन्मनो वा न तत्र काचिद् व्यवस्था। यद्यपि चार्वाकाणां नास्ति कोऽपि सिद्धान्तः, ते हि लौकायतिकाः। यथा लोके विलोक्यते तदनुसारेण ते ब्रुवन्ते, तथापि सर्वेषां भारतीयदर्शनानां पूर्वपक्षत्वेन लोकायतदर्शनं विचारणीयतां लभत इति तस्यैव प्राग् विचार आरभ्यते।

## १. चार्वाकदर्शने पुनर्भवस्य प्रतिवादः

चार्वाका एव लौकायतिका इति निगद्यन्ते[१]। ते यदृच्छावादिनश्चतुर्भूत-वादिनश्च। पृथिव्यप्तेजोवायूनां यदृच्छासंघातेन शरीरं जायते। तत्र चैतन्यं तथोत्पद्यते यथा यवगुडादिषु मिलितेषु मद्यरूपेण परिणतेषु मदो जायते। तन्मते मरणमेव मुक्तिः। एतेषां नये प्रत्यक्षमेव केवलं प्रमाणत्वेनानुगृहीतम्, न च ते प्रमाणान्तराणि मन्यन्ते। तेनात्र पुनर्भवस्य नैव स्वीकृतिः, तस्य परोक्षत्वात्। किञ्च पुनर्जन्मनि स्वीकृते तत्र तत्र दर्शनेषु कर्मफलव्यवस्था विजृम्भते। तां च दुर्व्यवस्थां मन्वानाश्चार्वाकाः प्राहुः—

यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥

---

१. पाणिनिना भगवता उक्थादिषु द्वितीयस्थाने लोकायतशब्दः पठितः। तेन लोकायतमधीयते विदुर्वा ये ते लौकायतिकाः (पा.सू. ४.२.६०)। शङ्करभगवत्पादैस्तु ब्रह्मसूत्रभाष्ये (१.१.१) लोकायतिक इति प्रयुक्तम्।

अस्मिन्नेव जन्मनि कर्मफलानि समीहन्ते देहिनः। एवञ्च पुनर्जन्मनः प्रत्यक्षाभावेनास्मिन् दर्शने नैव ग्रहणम्। परमेतेषां मतं प्रत्याख्याय सर्वेषु दर्शनेषु पुनर्जन्मनो व्यवस्था कृता विद्यते।

**२. बौद्धदर्शने पुनर्भवः**

बौद्धानां सर्वेषु प्रस्थानेषु न कश्चिदात्मा परिगणितः। तथापि तत्र बौद्धप्रस्थानेषु रूपसंज्ञासंस्कारवेदनाविज्ञाननामकेषु पञ्चसूपादानस्कन्धेष्वपि मिथ्यासङ्घातभूतेषु आत्मत्वारोपेण पुनर्जन्मनो व्याख्यानं प्रसरति। स्कन्धा एव कर्मणां प्रतीत्यसमुत्पादे हेतवः। त एव जायन्ते, म्रियन्ते, पुनर्जायन्ते च। पुनर्जन्मविषये बौद्धास्तावदेवं समुद्घोषयामासुः—

पुनर्भवाय संस्कारानविद्यानिवृतस्त्रिधा।
अभिसंस्कुरुते यांस्तैर्गतिं गच्छति कर्मभिः[१]॥

अस्याः कारिकायाः प्रसन्नपदायां वृत्तावुक्तम्—

कुशला अकुशला आनेज्याश्च यदि वा कायिका वाचिका मानसाश्चेति। तांस्त्रिविधान् कर्मलक्षणान् संस्कारानविद्यानिवृतः पुद्गलः करोति[२]। निबन्धने तावदुक्तम्—

'अतीतावस्थं कर्म संस्काराः। वर्तमानावस्थं कर्म भवः'[३]।

अपि च,

'पुनर्भवोऽनागतं जन्म'[४]। बौद्धनयेऽपि वर्तमानं जन्मातीतकर्माधीनम्। वर्तमानजन्मनि कृतकर्मभिः पुनर्जन्मेति प्रसिद्धम्। अर्थाद् वर्तमानजन्मनः कुशलाकुशलकर्मणां विपाकनिमित्तं पुनर्जन्म भवति। अत एव पुनर्भवसन्तानमभिप्रेत्य बौद्धा अपि निगदन्ति—

'जन्मसंक्लेशः पुनर्भवजातिः, जातस्य चित्तचैत्तानां प्रतिक्षणोत्पादः, पुनर्भवप्रबन्धश्च'[५]। अस्य टीकाकारो विवृणोति—

---

१. म.शा. २६.१;
२. तत्रैव, प्रसन्नपदावृत्तिः।
३. निबन्धटीका, १४७;
४. तत्रैव, १६२।
५. मध्यान्तविभागशास्त्रम्, भाष्यम्, ५.२७।

'पुनर्भवजातिः प्रतिसन्धिचित्तम्।........प्रतिक्षणोत्पादः प्रतिसन्धि-बन्धादूर्ध्वमामरणात्। पुनर्भवप्रबन्ध इति क्लेशसहितो मरणभवः...........ततश्च पुनरपि उत्पत्तिभवः'[1]।

बौद्धा अनात्मवादमवलम्ब्यापि पुनर्भवं व्यवस्थापयन्ति। पुनर्जन्महेतूनां विमर्शे कर्मणः कारणतां सर्वे सम्प्रदायाः स्वीकुर्वन्ति। तत्र चातीतकर्माधीनं वर्तमानं जन्म। वर्तमानजन्मनि कृतैः कर्मभिरनागतं जन्म पुनर्जन्म वा भवति। अर्थाद् यदा कर्माणि विपाकाय तत्परतां व्रजन्ति तदैव पुनर्भवः पुनर्जन्म वा स्थानं लभते। एवञ्च सर्वेषां पुनर्भवप्रदानानां हेतूनां मूलमविद्येति नास्ति विवादलेशः। यथा चाहुः—'अविद्या खलु संसारमूलम्'[2]।

अनयैवाविद्यया असत्यप्यात्मतत्त्वे आत्मवाद उपादीयते, तेन च पुनर्जन्म-सम्बन्धः। तथा हि—'भोगयोग एव सहाविद्यया आत्मवादोपादानम्'[3]।

अपि चाभिधर्मकोशे—

'पूर्वक्लेशदशाविद्या संस्काराः पूर्वकर्मणः'[4]।

अविच्छिन्नभवचक्रस्य व्यवस्थामुद्दिश्य भगवतो बुद्धस्य वचनमभिधर्मकोशे प्रोक्तम्—

'क्लेशात् क्लेशः क्रिया चैव ततो वस्तु ततः पुनः।
वस्तुक्लेशाश्च जायन्ते भवाङ्गानामयं नयः'[5]॥

इदमत्र तात्पर्यम्। क्लेशादपि क्लेशः, ततश्च पुनः कर्म ततो वस्तु प्राप्यते। ततश्च पुनः क्लेशा जायन्ते, अतः परस्परं कार्यकारणभावो विलसति। अत एवाविद्यापि कारणतां भजति।

बौद्धा हि सर्वथा नवीनामेव कामपि सरणिमनुसरन्ति। आत्मवादिदर्शनेषु यथा पुनर्भववादीनां व्यवस्था जीवस्य च स्वरूपं प्रतिपादितं तथा नेह प्रवर्तते। बौद्धानां चतुर्षु सम्प्रदायेषु सौत्रान्तिका वैभाषिकाश्च पालिग्रन्थाननुसृत्य कर्मविपाकं पुनर्भवं वा व्यवस्थापयन्ति। तथा हि—पञ्चस्कन्धरूपमात्मानं सत्कायदृष्टिसंवलितं

१. मध्यान्तविभागशास्त्रम्, स्थिरमतिटीका; २. विभाषाप्रभा, ३६१।
३. तत्रैव, ३६३; ४. अभिको. ३.२१।
५. तत्रैव, ३.३७।

स्वीकृत्य ते स्कन्धसङ्घातमेव भोक्तृत्वेन स्थापयन्ति। तत्रैव कर्माणि विपच्यन्ते, भोगाश्च वेदनास्कन्धेन जायन्ते, संस्काराः प्रभवन्ति, चक्षुर्विज्ञानादिकं भवति, रूपं संज्ञा च यथायोनि सञ्जायत इति। विज्ञानवादिनो योगाचारास्तु विज्ञानस्कन्धमेव मुख्यतया प्रतिष्ठाप्य तमेव विपाकं स्वीकुर्वन्ति। शून्यवादिनो माध्यमिकास्तत्र कर्मणामविप्रणाशमुपस्थापयन्ति। तेन फलभोगसिद्धिः पुनर्भवो वा भवतीति संक्षेपः।

### ३. जैनदर्शने पुनर्भवः

जैनदर्शने किल कर्मफलदातृत्वेन नेश्वरस्य स्थापना क्रियते। जीवानां कर्माण्यनुसृत्य पुद्‌गलाश्च जीवाश्च तथा परिणामं लभन्ते, यथा तत्तद्योनिषु जन्म भवति। अस्मिन् नये बन्धस्य जन्मनो वा पञ्च कारणानि निर्दिष्टानि सन्ति। तानि च तत्त्वार्थाधिगमसूत्रे प्रोक्तानि वर्तन्ते। यथा—

'मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः'[१]।

अयमर्थः—मिथ्यादर्शनम्, अविरतिः, प्रमादः, कषायः, योगश्चेति पञ्चकं जीवमावरणरूपेण बध्नाति। निर्विकल्पकज्ञानरूपं दर्शनं यदा मिथ्या जायते, तदा सम्यग्दर्शनस्याभाव एव सर्वथा भवतीति बन्धस्य मूलकारणमेतत्। तेन च विरतिर्न जायते। भोगेषु रतिरेव निरन्तरं प्रसरति। तथा च सम्यग्ज्ञानादीनामर्जनाय नावधानं दीयत इति जीवः प्रमादी भवति। एवञ्च पापादिवासना कषायरूपेण जीवं बध्नाति। कषायेभ्यश्च योगो भवति। कर्मणां सम्बन्ध एवेह योगः। कर्मसम्बन्धरूपयोगेन जीवः पौनःपुन्येन जन्ममरणचक्रं गृह्णातीति।

आर्हतानां दर्शने भगवतीसूत्रमेव प्राथम्यं भजते। तत आरभ्य बहुषु बहुधा च पुनर्भवविषयको विचारः प्रसारं लेभे। इह तु पुनर्जन्मविमर्शे साररूपेणैव बन्धं निर्देष्टुं तत्त्वार्थवार्तिकस्यैव प्रथमतोऽवतारणा कृता। तथा हि—

'बध्यतेऽनेन बन्धनमात्रं वा बन्धः। बध्यते येनास्वतन्त्रीक्रियते अस्वतन्त्रीकरणमात्रं वा बन्धः'[२]। 'कर्मणा जीवः सकषायो भवति........जीवकर्मणोरनादिः सम्बन्धः। ........कर्मणो योग्यान् पुद्‌गलानादत्ते। पुद्‌गलवचनं कर्मणस्तादात्म्यख्यापनार्थम्'[३]।

---

१. त.सू. ८.१।
२. त.वा. १.४.१०।
३. तत्रैव, ८.२.४-५।

'अतस्तदुपश्लेषो बन्धः'[१]।

आचार्यो गृद्धपिच्छोऽपि बन्धस्य लक्षणमित्थं मनुते—

'आत्मकर्मणोरन्योन्यप्रवेशात्मको बन्धः'[२]।

अभिधानराजेन्द्रकोशे भावबन्धमेव मूलं निश्चित्य बन्धकारणमुक्तम्—

'भावेन मिथ्यात्वादिना......जीवस्य बन्धो भावबन्धः'[३]।

तद् रागद्वेषाभ्यां भावबन्धस्य द्विधा भेदः स्थानाङ्गसूत्रे (२.४) विवृतो दृश्यते—

'माया लोभः कषायश्चेत्येतद् रागसंज्ञिकं द्वन्द्वम्।
क्रोधो मानश्च पुनर्द्वेष इति समासनिर्दिष्टः'[४]॥

अत्रेदं तात्पर्यम्—मायालोभयोर्युगली रागो भवति। क्रोधमानयोर्द्वन्द्वं द्वेषरूपतां भजति। तत्र जीवस्य कायबन्धः खलु पुद्गलबन्ध इति कथ्यते।

अत्र प्रकारान्तरेण पुनर्भवस्य बन्धस्य वा त्रिधा व्यवस्था दृश्यते। जीवबन्धः, अनन्तरबन्धः, परस्परबन्धश्चेति। अभिधानराजेन्द्रकोशे त्रयाणामेव बन्धानां तात्पर्यं निदर्शितं विद्यते। मानसव्यापारादिप्रयोगेण कर्मणां पुद्गलानाञ्च यः संश्लेषो जायते, स एव जीवप्रयोगबन्धः। अनेनैव जीवो जीवत्वं लभते। प्रारब्धकर्माणि पुद्गलैः सह संयुज्य प्रयोगबन्धं तन्वते। अयं प्रथमो बन्धः। ततश्च या अविच्छिन्नबन्धधारा बद्धानां पुद्गलानां समायाति साऽनन्तरबन्ध इति निगद्यते। कर्मभिर्भोगाः, भोगैश्च कर्माणि परम्परां सूयन्ते। तत्र प्रथमं बन्धकालं विहाय ये द्वितीयादयोऽवसराः समायान्ति, तेऽपि सर्वे समुदितरूपेण परस्परबन्ध इति निगद्यन्ते। अनेनैव बन्धेन पुण्यापुण्यमिश्रभोगाः सम्भवन्ति। तेन च जीवो भोक्ता भवति। तथा च पञ्चास्तिकायस्यामृतचन्द्रवृत्तौ प्रोक्तम्—

'निश्चयेन शुभाशुभकर्मनिमित्तसुखदुःखपरिणामानां व्यवहारेण शुभाशुभसम्पादितेष्टानिष्टविषयाणां भोक्तृत्वाद् भोक्ता'[५]।

अत्रायं विशेषः—भोगा एव भोक्तृत्वेन हेतुतां वहन्ति। भोक्तृत्वमेव वा भोगः। स हि द्विधा व्यवस्थानं लभते। निश्चयनयेन शुभाशुभकर्मजनितानि सुखानि

---

१. त.वा., ८.२.८;
२. सर्वार्थसिद्धिः, १.४।
३. अ.रा.को.;
४. तत्रैव।
५. पञ्चा., २७, अमृतचन्द्रवृत्तिः।

दुःखानि च जीवस्यैव परिणामानि भवन्ति। स एव तेषां भोगं करोति। व्यवहारनयेन तु शुभाशुभकर्मभिः सम्पादितानामिष्टानिष्टविषयाणां भोक्ता जीवः। निश्चयनयेन य आत्मनः परिणामो भोगः, स भावभोगो भावनारूपेण चित्तवृत्तिरूपेण वा तिष्ठति। किन्तु पौद्गलिकविषयाणां भोग्यत्वे यो द्रव्यभोगो भवति, व्यवहारतः स एव भोग इति कथ्यते।

अयमत्र सारः—जीवकृतानि कर्माण्येव बन्धभोगयोः कारणानि भवन्ति। जीव एव पुद्गलयोगेन जन्म लभते मरणञ्चानुभवति। मरणानन्तरं च पुनर्भवं प्राप्नोति। अस्मिन् दर्शने जीवः परिणामी भवति। तथा च जीवपरिणामरूपौ बन्धभोगौ भवतः। तेन भावबन्धस्य भावभोगस्य च व्यवस्था क्रियत इति।

## ४. न्यायदर्शने पुनर्भवः

नैयायिकानां वर्तमानजन्मार्जितकर्माशयेन पुनर्जन्म भवतीति सिद्धान्तः। तच्च ते प्रेत्यभावनाम्ना व्यवहरन्ति। तथा च सूत्रम्—'पुनरुत्पत्तिः प्रेत्यभावः'[1]।

'नास्येदं शरीरमपूर्वमनुत्तरं च। पूर्वशरीराणामादिर्नास्ति, उत्तरेषामपवर्गान्त इति प्रेत्यभावः....पुनरुत्पत्तिः पुनर्देहादिभिः सम्बन्धः। पुनरित्यभ्यासाभिधानम्। यत्र क्वचित्प्राणभृन्निकाये वर्तमानः पूर्वोपात्तान् देहादीञ्जहाति, तत्प्रैति। यत् तत्रान्यत्र वा देहादीनन्यानुपादत्ते तद् भवति। प्रेत्यभावो भूत्वा पुनर्जन्म। सोऽयं जन्ममरण-प्रबन्धाभ्यासोऽनादिरपवर्गान्तः प्रेत्यभावो वेदितव्य इति'[2]।

'पूर्वोपात्तशरीरादिपरित्यागादन्यशरीराद्युपसङ्क्रान्तिः प्रेत्यभाव इति। पुनर्ग्रहणं संसारस्यानादित्वज्ञापनार्थम्'[3]।

न्यायनयेऽपि जीवो यथाकर्म शरीरं प्राप्य सुखदुःखात्मकं फलं भुङ्क्ते। अयमेव भोगः संवेदनशब्देन धर्माधर्मौ च प्रवृत्तिनाम्ना व्यवह्रियन्ते। एवञ्च धर्माधर्मरूपा प्रवृत्तिः सुखदुःखसंवेदनरूपं फलं प्रसूते। येषां धर्माधर्माणां समवायो जीवो जन्मना आयुषा संयुनक्ति। स कर्माशय इति निगद्यते। जन्मायुर्भोगाः समवेतरूपेण विपाकनाम्ना व्यवह्रियन्ते। कर्मणां कर्माशयस्य वा विपाकेन

---

१. न्या.सू., १.१.९।

२. तत्रैव, भाष्यम्।

३. तत्रैव, वार्तिकम्।

तदुपभोगः क्षीयते। अत एव प्रयाणं वा मरणं वा भवति। पुनर्जन्मनः कृतेऽन्यकर्माशय उपतिष्ठत इति भाष्यकारो निगदति—

'विपाकसंवेदनात् कर्माशयक्षये शरीरपातः प्रयाणम्। कर्माशयान्तराच्च पुनर्जन्म'[१]।

अत्रेदमवधेयम्—इयं पुनरुत्पत्तिरात्मनो भवति, शरीरस्य वा? आत्मा तावदजन्मा नित्यः। स कथं पुनर्जन्म लभेत? शरीरं चैकं न पुनः पुनर्जन्म गृह्णीयादिति चेदुद्योतकरः प्राह—मनस एव पुनर्जन्म भवति। सुखदुःखभोगाश्चात्मन इति आत्मानं प्रेत्यभावभागिनं मन्यन्ते न्यायविद इति। जयन्तभट्टस्तु प्राह—

'आत्मनश्च स्थायित्वेन क्रियाभ्यावृत्तिसम्भवात् तस्यैव पुनः पुनरुत्पत्तिं ब्रूमः। उत्पत्तिवन्मरणमपि सोऽयमात्मनो मृत्वा पुनर्जन्म प्रेत्यभाव इति।.......मरणमात्मनो भोगायतनदेहेन्द्रियादियोग उच्यते। जन्म तु तत्सम्बन्धः'[२]।

अस्मिन् दर्शने स्थूलशरीरमिन्द्रियाणि च भौतिकान्येव सन्ति, अतो मनःसहितस्यात्मन एव प्रेत्यभावः सिद्धान्तितः, उभयोः शाश्वतत्वात्।

अपि च, ईश्वरो दिक्कालौ धर्माधर्मरूपमदृष्टं च साधारणानि कारणानि भवन्ति सर्वेषां विपाकानाम्। नैतैर्विना कथमपि पुनर्जन्म वा सुखदुःखरूपो विपाको वा सम्भवति। न्याये नातिवाहिकशरीरस्य स्वीकृतिः। अतस्तेषां जन्मद्वयान्तराले शरीरादिरहितस्य प्रेतस्य सम्मतिर्नास्तीति विशेषः। अत एव ते खण्डशरीरं कल्पयन्ति, यच्च धर्माधर्मवशेन मरणात्प्रागेव जनितं विद्यते। तथा च मरणकालादनन्तरमेव प्रेत्यभावः पुनर्जन्म वा लभ्यते, येन सुखदुःखभोगा जन्यन्त इति।

## ५. वैशेषिकदर्शने पुनर्भवः

वैशेषिकाणां तत्त्वमीमांसा प्रायेण नैयायिकैः सङ्गृहीतेति न तत्र पुनर्भवस्य व्यवस्थायां कापि विमतिः। अत्रापि प्रस्थाने जीवात्मानः परमात्मवद् विभवः। मनश्चाणुपरिमाणम्। तत्सन्निकर्षेणात्मा कर्मफलानि भुङ्क्ते। तत्र सुखं दुःखं चेति द्वयी कर्मविपाकः। कर्म च धर्माधर्मौ जनयित्वा नश्यति। धर्माधर्मौ चादृष्टनाम्ना व्यवह्रियेते। सुखदुःखादेरुपलब्धावचेतनस्य मनसः साधनमात्रत्वेन प्रेत्यभावः पुनर्जन्म वाऽऽत्मन एवाभिमतः। अत्राहुः कणादपादाः—

१. न्यायभाष्यम्; २. न्यायमञ्जरी, २, पृ. ७२।

'इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः। तत्संयोगो विभागः'[१]।

ताभ्यां धर्माधर्माभ्यां संयोगो जन्म अपूर्वाभिः शरीरेन्द्रियवेदनाभिः सम्बन्धः संयोग इहोच्यते विभागस्तु शरीरमनोविभागो मरणलक्षणः। तथा चायं जन्ममरणप्रबन्धः संसारो भावापरनामा धर्माधर्माभ्यामित्यर्थः[२]।

एवं धर्माधर्मयोः फलरूपेण यथानाम पुनर्भवो जायते। तस्य त्रिधा व्याख्यानं भाष्यकारैः प्रशस्तपादैः कृतं विद्यते। तथा हि—

१. अविदुषो रागद्वेषवतः प्रवर्तकाद् धर्मात् प्रकृष्टात् स्वल्पाधर्मसहिताद् ब्रह्मेन्द्रप्रजापतिपितृमनुष्यलोकेषु आशयानुरूपैरिष्टशरीरेन्द्रियविषयसुखादिभिर्योगो भवति।

२. तथा प्रकृष्टादधर्मात् स्वल्पधर्मसहितात् प्रेततिर्यग्योनिस्थानेषु अनिष्टशरीरेन्द्रियविषयदुःखादिभिर्योगो भवति।

३. एवं प्रवृत्तिलक्षणाद् धर्माधर्मसहिताद् देवमनुष्यतिर्यङ्नारकेषु पुनः संसारबन्धो भवति[३]। इत्थं जननमरणचक्रमेव संसार इति प्रेत्यभाव इति वा निगद्यते।

### ६. सांख्यदर्शने पुनर्भवः

सांख्यानां तावत् प्रकृतेः प्रधानस्य वा बन्धः संस्करणं वा जायते। यथोक्तम्—

'तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः'[४]॥

एते सांख्याः पुरुषस्य भोक्तृत्वं साधयन्ति। तथा हि—

'पुरुषोऽस्ति भोक्तृभावात्'[५]।

अत्र युक्तिदीपिकायां व्याख्यातम्—

'इह सुखदुःखमोहात्मकत्वादचेतनं व्यक्तमव्यक्तं च। तस्मादस्य परस्परेण भोगो नोपपद्यत इत्यवश्यं भोक्त्रा भवितव्यम्। योऽसौ भोक्ता स पुरुषः। आह, कः पुनरयं भोगो नाम? उच्यते, भोग उपलब्धिसद्भावात्'[६]।

---

१. वै.सू. ६.२.१४-१५; २. तत्रैव, उपस्कारः।
३. प्रभा., पृ. ६७५-७९; ४. सां.का. ६२।
५. तत्रैव, १७; ६. युक्तिदीपिका।

यद्यपि प्रकृतिपुरुषौ विभू अनादी नित्यौ। तथापि प्रकृतेरेकत्वेन पुरुषाणां च नानात्वेन यस्य पुरुषस्य कृते प्रकृतिर्भोगसाधनात्मकपरिणामान् गृह्णाति, तमेव पुरुषं बुद्ध्यादिरूपेण ते परिणामा अवच्छिन्दन्ति। अवच्छेदेनैव भोक्तृत्वं कल्पते। अपि चाहुर्विज्ञानभिक्षुपादाः—

'तथा हि प्रमाणवृत्त्यारूढं प्रकृतिपुरुषादिकं प्रमेयं वृत्त्या सह पुरुषे प्रतिबिम्बितं सद् भासते अतोऽर्थोपरक्तवृत्तिप्रतिबिम्बावच्छिन्नं स्वरूपचैतन्यमेव भानं पुरुषस्य भोगः प्रमाणस्य च फलमिति। ततश्च प्रतिबिम्बरूपेणार्थसम्बन्धे द्वारतया वृत्तीनां करणत्वम्'[१]।

अत्रेदमवधेयम्—भोक्तृत्वं चापि लिङ्गशरीरसहकारेणैव सम्पद्यते। इदमेव लिङ्गशरीरं भावैरधिवासितं सद् भोगाय वासनानुसारेण तत्र तत्र जन्म गृह्णाति। विभोः पुरुषस्य तु जन्ममरणे नोपपद्येते इति। पाञ्चभौतिकं शरीरं यावन्न लभते, तावल्लिङ्गशरीरं भोगशून्यं संसरतीत्याह—

'पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम्।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्'[२]॥

तथा च भोगाय लिङ्गशरीरं स्थूलशरीरे प्रविशति, प्रविश्य च भोगानश्नुते। न च स्थूलशरीरमपेक्ष्य लिङ्गशरीरस्य सूक्ष्मशरीरस्य वा व्यापकत्वेन प्रवेशानुपपत्तिः, आतिवाहिकशरीरस्यापि स्वीकृतत्वात्। तथा च सूत्रम्—

'न स्थूलमिति नियम आतिवाहिकस्यापि विद्यमानत्वात्'[३]।

एवं पुनर्भवं व्याख्यातुमातिवाहिकशरीरस्य विद्यमानतां स्वीकुर्वन्ति सांख्यसूत्रकाराः। आतिवाहिकं शरीरं सूक्ष्ममिति न प्रत्यक्षम्, सूक्ष्मस्येन्द्रियातीतत्वात्। अपि च व्याचष्टे विज्ञानभिक्षुः—

'लोकाल्लोकान्तरं लिङ्गदेहमतिवाहयतीत्यातिवाहिकम्'[४]।

पुनर्भवं सङ्केतयन् युक्तिदीपिकाकारः प्राह—

'आतिवाहिकं सूक्ष्मशरीरमिन्द्रियाणां धारणप्रापणसमर्थं नित्यं बाह्येनापायिना परिवेष्ट्यते परित्यज्यते च'[५]।

---

१. विज्ञानभिक्षुः, सां.सू. १.१०४;
२. सां.का. ४०।
३. सां.सू. ५.१०३;
४. विज्ञानभिक्षुः।
५. युक्तिदीपिका, सां.का. ३९।

अत्रायं सारः—यावत् प्रकृतिपुरुषयोर्भोगप्रयोजकः सम्बन्धस्तावज्जन्ममरण-चक्रं नैव विरमति। त्रैगुण्याधीनोऽयं भोगः। येन देवानां मनुष्याणां नारकाणां च जन्मानि भवन्ति। तत्तत्कर्मानुसारेण तत्तद्योनीः प्राप्नुवन्ति। तथा च सांख्यकारिका—

ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः स्वर्गः।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तम्[1]॥

युक्तिदीपिकामनुसृत्यादृष्टानुसारेण भौतिकसर्गचक्रं ज्ञातव्यम्। तथा हि—




अत्रायं विशेषः—तच्च सूक्ष्मशरीरं स्थूलशरीरपातेन सहोत्पद्यते। स्थूलशरीरजन्मना सह नश्यति। पुनश्चोत्पद्यते। सूत्रकारमतेन तु आतिवाहिकशरीरं विना देहान्तरयात्रा पुनर्भवो वा नोपपद्यत इति। सांख्यकारिकाकारस्तु लिङ्गशरीरमेव पुनर्जन्मने पर्याप्तं मनुते। तथा चाह—

'चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया।
तद्वद् विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम्॥
पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन।
प्रकृतेर्विभुत्वयोगान् नटवद् व्यवतिष्ठते लिङ्गम्'[2]॥इति।

## ७. योगदर्शने पुनर्भवः

योगदर्शने कर्मणां विपाकं कर्माशयञ्चाधिकृत्य बहु विवेचितं विद्यते। तत्र भगवता पतञ्जलिना यत् सूत्रितं तदेव प्रथमत आदीयते—

'सति मूले तद्विपाको जात्यायुर्भोगाः'[3]।

अत्र व्यासभाष्ये स्पष्टीकृतं विद्यते—

१. सां.का. ५४;
२. तत्रैव, ४१-४२।
३. यो.सू. २.१३।

'सत्सु क्लेशेषु कर्माशयो विपाकाऽऽरम्भी भवति, नोच्छिन्नक्लेशमूलः। यथा तुषावनद्धाः शालितण्डुला अदग्धबीजभावाः प्ररोहसमर्था भवन्ति, नापनीततुषा दग्धबीजभावा वा; तथा क्लेशावनद्धकर्माशयो विपाकप्ररोही। विपाकस्त्रिविधो जातिरायुर्भोग इति'[१]।

अत्र जातिर्जन्म, आयुर्जीवनकालः, भोगश्च सुखदुःखरूपः। त्रिविधोऽपि विपाकः कर्मफलनिष्पत्तिरूप इति कर्माशय एव तत्र हेतुः। अस्मिन् प्रसङ्गे भाष्यकृद्भिः कतिपये प्रश्ना उपस्थापिताः। यथा—

१. एकैकं कर्म किमेकस्य जन्मनः कारणं भवति? अथवा—
२. एकमेव कर्म जन्मनामनेकेषां हेतुतां भजति? अथवा—
३. किमनेकैः कर्मभिरनेकेषां जन्मनां निष्पत्तिः? अथवा—
४. अनेकानि कर्माणि एकस्यैव जन्मनः कारणानि भवन्तीति।

एतेषां प्रश्नानां समाधानाय भाष्यमेवोद्ध्रियते—

'जन्मप्रयाणान्तरे कृतः पुण्यापुण्यकर्माशयप्रचयो विचित्रः प्रधानोपसर्जनभावेनावस्थितः प्रयाणाभिव्यक्त एकप्रघट्टकेन मरणं प्रसाध्य सम्मूर्च्छित एकमेव जन्म करोति। तच्च जन्म तेनैव कर्मणा लब्धायुष्कं भवति। तस्मिन्नायुषि तेनैव कर्मणा भोगः सम्पद्यत इति'[२]।

अयं भावः—एकजन्मना भोग्यानां कर्मणां समूह एव कर्माशय इति निगद्यते। येन जीवो यथार्हमायुर्लभते। तस्मिंश्चायुषि तत्कर्मसमूहस्य भोगो भवति। कश्चित् कर्माशय एकजीवनेन भुज्यते। स एकभविकः कथ्यते। तत्र त्रैविध्यं दृश्यते। शङ्करभगवत्पादैर्योगभाष्यविवरणे तत्सर्वं विशदीकृतं विद्यते। तत्र कर्माशयानामियं व्यवस्था भवति। यथा—




१. तत्रैव, भाष्यम्;
२. तत्रैव।

तत्रापि कर्माशयेन वासनायाः सहभावो विवेचितः। तथा हि—

'क्लेशकर्मविपाकानुभवनिर्वर्तिताभिस्तु वासनाभिरनादिकालसम्मूर्च्छितमिदं चित्तं विचित्रीकृतमिव सर्वतो मत्स्यजालं ग्रन्थिभिरिवाततमित्येता अनेकभवपूर्विका वासनाः। यस्त्वयं कर्माशय एष एवैकभविक उक्त इति। ये संस्काराः स्मृतिहेतवस्ता वासनाः। ताश्चानादिकालीना इति'[1]।

'प्रधानोपसर्जनीभावेन त्रिविपाकारम्भी एष एवैकभविक उक्तः। न दृष्टजन्मवेदनीयो नाप्यनियतविपक्तिरदृष्टजन्मवेदनीयो नापि च वासनाः'[2]।

अपि च कर्माशयानामेकजन्मना वा नैकजन्मभिर्वा विपाको भवति, तेषां भोगविषये योगसूत्रे प्रोक्तम्—

'ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात्'[3]।

ते नाम जात्यायुर्भोगरूपास्त्रिविधा विपाकाः पुण्यजन्यत्वे सुखरूपं पापजन्यत्वे च दुःखरूपं फलं प्रसूयन्ते।

अत्रायं सारः—पातञ्जलाः पुनर्जन्मने कर्माशयस्य स्थापनां कुर्वन्ति। विपाकोन्मुखो वासनासङ्घात एव कर्माशयः। स च कर्माशय एकस्मिन् जन्मनि जन्मान्तरेषु वाऽऽयूरूपेण भोगरूपेण च विपच्यते। सेयमर्जिता वासना। भोगव्यवस्था तु विविधासु योनिष्वनादिवासनया जायते। सा च वासना विपाकेन व्यज्यते। अभिव्यक्ता चेयं वासना कर्माशयात् पृथक् तिष्ठन्ती फलानि प्रसूते। पूर्वस्मिन् जन्मनि मनुष्यो यदि जन्मान्तरे मार्जारत्वं लभते, तर्ह्ययं कर्माशयस्य विपाकः। इयमर्जिता वासना। परं मार्जारस्य मूषिकं प्रति द्वेषस्तावदनादिवासनया फलतीति।

## ८. मीमांसादर्शने पुनर्भवः

मीमांसकाः कर्मणामपूर्वं स्वीकुर्वाणाः पुनर्जन्म व्यवस्थापयन्ति। कर्मजन्यस्यापूर्वस्य फलपाकपर्यन्तं जीवात्मन्यवस्थानं भवतीति तेषामभिमतम्। अपूर्वशब्दस्तु अदृष्टपर्यायः। अपूर्वत्वं नाम कर्मजन्यं पुण्यापुण्यत्वम्। तस्यैव तादृशफलस्योपजनकत्वम्। इदमपूर्वं तावदेवात्मनि तिष्ठति यावत् फलं

---

१. यो.सू.।

२. तत्रैव, विवरणम्।

३. तत्रैव, २.१४।

नोत्पादयति। शरीरान्तरं भोगसाधनं प्रदायैव तन्नश्यतीति मीमांसकानामभिमानः। अत आहुर्भट्टपादाः—

'कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा।
योग्यता शास्त्रगम्या या परा साऽपूर्वमिष्यते'[१]॥

अयमाशयः—कर्मणां सम्पूर्तेः प्राक् फलनिष्पत्तये कर्म न प्रभवति, पूर्वरूपाभावात्। कर्मणां कर्तापि कर्मसम्पूर्तिं विना फलयोग्यतां नैव लभते। अत एव यागादिविधिशास्त्रैर्ब्राह्मणवधादिनिषिद्धवचनैश्च या योग्यता जायते, सैवापूर्वमिति निगद्यते। फलं निष्पाद्य तदपूर्वं नश्यति। एवं प्रत्येकं कर्म जन्मनाशशीलं भवति। अपि चाहुः—

'यागादेव फलं तद्धि शक्तिद्वारेण सिध्यति।
सूक्ष्मशक्त्यात्मकं वा तत् फलमेवोपजायते'[२]॥

एवञ्च धर्माधर्मयोरुद्देश्येन सुखदुःखे फलरूपेण समाश्रित्य मीमांसका अपूर्वस्य स्थापनां कुर्वन्ति। संक्षेपतः सुखफलको धर्मो दुःखफलकश्चाधर्मः। अयं धर्म आत्मन्यपूर्वरूपेण फललाभं यावत् तिष्ठति। अधर्मकृतमपूर्वमपि तथैव। धर्माधर्मौ हि कर्मणी। वेदविहितं कर्म धर्मो वेदेन निषिद्धं कर्म चाधर्मः। अपूर्वं चोभयत्र धर्माधर्माभ्यां जन्म लब्ध्वाऽऽत्मना सहात्मनि वा तिष्ठन् सुखदुःखरूपे फले प्रसूते। अपूर्वाधिकरणारम्भे जैमिनीयं सूत्रं यथा—'चोदना पुनरारम्भः'[३]।

अत्रेदं भाष्यम्—'कथं पुनरिदमवगम्यतेऽस्ति तदपूर्वमिति? उच्यते, चोदना पुनः आरम्भः। चोदनेत्यपूर्वं ब्रूमः। अपूर्वं पुनरस्ति। यत आरम्भः शिष्यते स्वर्गकामो यजेतेति। इतरथा हि विधानमनर्थकं स्याद् भङ्गित्वाद् यागस्य। यद्यन्यदनुत्पाद्य यागो विनश्येत्, यदि पुनः फलवचनासामर्थ्यात् तदेव न विनश्यतीति कल्प्यते, नैवं शक्यम्। न हि कर्मणोऽन्यद् रूपमुपलभामहे'[४]।

यदि कर्मैव फलदानाय पर्याप्नोति, तर्हि किमर्थमपूर्वस्य कल्पनागौरवमाश्रियते। अत्राहुः कुमारिलपादाः—

---

१. तन्त्रवार्तिकम्, २.१.५; २. तत्रैव।
३. मी.सू. २.१.५; ४. तत्रैव, भाष्यम्।

'फलाय विहितं कर्म क्षणिकं चिरभाविने।
तत्सिद्धिर्नान्यथेत्येवमपूर्वं प्रति गम्यते'[१]॥

इदमत्रावधेयम्—धर्माधर्मनियुक्तानां धर्माधर्मरूपाणां वा विविधानां कर्मणां बहून्यपूर्वाणि जायन्ते। तेषां प्रधानापूर्वाणि जन्मने प्रभवन्ति, गौणानि च यथायोगं तत्तत्प्रधानापूर्वेण सह विपच्यन्त इति सिद्धान्तः।

प्राभाकरास्तु नापूर्वं सिद्धान्तयन्ति। प्रत्युत क्रियैव कार्यत्वेन सूक्ष्मरूपेण जीवात्मनि सुखदुःखरूपफलभोगपर्यन्तं तिष्ठति। कौमारिला अपूर्वमात्मनिष्ठशक्तिरूपेण प्रतिष्ठापयन्ति। तन्मतं प्रत्याचक्षाणः प्रभाकरानुयायी शालिकनाथमिश्रः प्राह—

'शक्तिमति चातीते शक्तिरप्यतीतेति प्रमाणान्तरसिद्धमिति न सापि स्थायिनी शक्या कल्पयितुम्। अपि चाश्रये निवृत्ते किमाश्रया शक्तिरवतिष्ठताम्? आत्माश्रितेति चेत्, नान्यदीया शक्तिरन्यत्र वर्तते प्रमाणान्तरविरोधादेव। किञ्च शक्तिमत्यसति शक्तेः फलं न युक्तम्। शक्तिमद्धि साधनम्, न शक्तिः केवला, अन्यथा शक्तित्वं न स्यात्'[२] इति।

मण्डनमिश्रास्तु कर्तृत्वस्यानुपपत्तिं मनसिकृत्य अपूर्वं कल्पयामासुः। यदा वेदो यागेन स्वर्गप्राप्तिं श्रावयति, तदा स एव वेदः पुरुषं यागे नियोज्य अवान्तरव्यापाररूपेणापूर्वमपि सूचयति। तथा हि—

'स्वर्गादिकं कामयमानस्य तदेव कार्यतया बोद्धुमवकल्पते यदेव तस्य काम्यमानस्य सिद्ध्यनुगुणम्। अन्यथा हि तत्कामिना सता तत्कार्यतयानवबुद्धं स्यात्। अपरित्यक्ततत्कामनासम्बन्धो हि तत्साधनं कार्यतयावबुद्ध्यते। तस्माद् यत्कामिनो यत्कार्यतयोपदिश्यते, तत् तस्य काम्यस्य साधनमिति नियोज्यकार्यान्वयानुपपत्त्यैव गम्यते'[३]।

तथा च विधिविवेके—'प्रलीयमानकर्मलब्धोपजनः पूर्वापराङ्गोपपादितावस्थान्तरो देशकालाद्यासादितपरिणतिभेद आनन्तर्यमपि कर्मणोऽतिवर्तमानः कोऽप्यतिशयः कर्तरि कर्मणश्चिरभाविनः फलस्य साधनं कथ्यते। तदसौ न कर्मकाले वर्तमानः। स्वकाले वर्तमानोऽपि कर्मणोऽतिवृत्तत्वान्न

---

१. तन्त्रवार्तिकम्, २.१.५।

२. प्रपं. वाक्यार्थमातृका, २.२३; ३. तत्रैव, २.१९।

कर्मसम्बन्धितयाध्यक्षमीक्षते। ........कर्मकाले तस्य भावितं तत्काले च कर्मणोऽभावः'[१]।

ब्रह्मसिद्धौ तु मिश्रपादैः कर्मफलदाता ईश्वर एव निगद्यत इति दर्शनान्तरेण व्याख्या।

पूर्वमीमांसादर्शने यज्ञादिभिः सुकृतैः स्वर्गलाभो भवति। तत्र मोक्षस्य चिन्ता नैव विधीयते। स्वर्ग एव मोक्ष इति तेषां सिद्धान्तः। एवं तर्हि पुनर्भवाय सुकृतेन सह दुष्कृतस्यापि योग आवश्यकः। धर्मेण सहाधर्मोऽपि दर्शनेऽस्मिन् बहुधा विचारविषयीकृतो विद्यते। तथाऽधर्मकर्मणा दुःखभोगाय पुनर्जन्म भवतीति।

## ९. अद्वैतवेदान्ते पुनर्भवः

अद्वैतिनामविद्यैव पुनर्भवस्य संसारस्य वा मूलं कारणम्। अविद्या च प्रतिव्यक्ति भिन्ना। सैव कर्मानुरूपाणि जीवरूपाणि विदधाति, यथायथं संसारयति। अविद्यारचितेन सूक्ष्मशरीरेण कर्मणां संस्कारान् धारयन् जीवो विश्वस्मिन् संसरति। अद्वैतवेदान्ते पुनर्भवव्यवस्था बन्धमोक्षव्यवस्था वा मायामाश्रित्य क्रियते। माया च मिथ्या भवति। मिथ्यात्वं च सदसद्विलक्षणत्वमनिर्वचनीयत्वम्। मायापरिणाम एव बन्ध इति कृत्वा तस्य मिथ्यात्वं स्थाप्यते। न हि नित्यमुक्तस्य आत्मनो यथार्थरूपः कोऽपि बन्धो भवति। जगतः सत्यत्वप्रतीतिरेव जन्ममरणचक्रं संसारं प्रवर्तयतीति संक्षेपः।

उपनिषत्प्रमाणं स्वीकुर्वाणा वेदान्तिनस्तावन्मुक्तपुरुषानतिरिच्य सर्वे जायन्ते म्रियन्ते, म्रियन्ते जायन्ते चेति सिद्धान्तयन्ति। यथोपनिषत्सु प्रोच्यते—

> 'न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्।
> अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे'[२]।।

आचरणं वा कर्म वा पुनर्जन्मनो हेतुः। तथा च श्रूयते—

> 'यथाकारी यथाचारी तथा भवति। साधुकारी साधुर्भवति। पापकारी पापो भवति। पुण्यः पुण्येन कर्मणा। पापः पापेन'[३]।

अयमाशयः—जीवो यथेच्छति तथा कर्म करोति। यथा कर्म करोति, तथैव फलं लभते। शङ्करभगवत्पादैः स्पष्टमुक्तम्—

---

१. विधिविवेकः, पृ. १६३-६४।

२. कठ. २.६; ३. बृ.उ. ४.४.५।

'संसारित्वे च काम एव हेतुरिति'[१]।

पुनर्जन्मकारणं प्रति सामान्यतया प्राणिनो द्वे गती वेदितव्ये। देवयानं पितृयानञ्चेति। त एव पुनरुत्तरायणदक्षिणायनशब्दाभ्यां निगद्येते। मनुष्याः सुखाय प्रयतन्ते। तत्कृते केचन ज्ञानमर्जयन्ति सद्योमुक्तये वा क्रममुक्तये वा। अपरे किलेष्टापूर्ताचरणेन स्वर्गादिसुखं प्राप्तुकामा भवन्ति। तत्र तावद् दक्षिणायनमार्गमधिकृत्य संक्षेपेण विविच्यते।

**दक्षिणायनम् :** यथा चाह निरुक्तकारः—

'अथ ये हिंसामाश्रित्य विद्यामुत्सृज्य महत्तपस्तेपिरे चिरेण वेदोक्तानि वा कर्माणि कुर्वन्ति ते धूममभिसम्भवन्ति। धूमाद् रात्रिं रात्रेरपक्षीयमाणपक्षम्। अपक्षीयमाणपक्षाद् दक्षिणायनम्, दक्षिणायनात् पितृलोकम्, पितृलोकाच्चन्द्रमसम्, चन्द्रमसो वायुम्, वायोर्वृष्टिम्, वृष्टेरोषधयश्चैतद् भूत्वा तस्य संक्षये पुनरेवेमँल्लोकं प्रतिपद्यन्ते'[२]।

अत्र धूमरात्रिप्रभृतयोऽधिदेवरूपमर्थमभिदधति। दक्षिणायनशब्दस्य तु स्पष्टमेव प्रयोगः कृतः। तत्रापि तदधिष्ठातृदेव एव गृह्यते। पितृलोकशब्दे च पितृपदं मातापित्रोर्वाचकम्, माता च पिता च पितरौ तयोर्लोक इति व्युत्पत्तेः। तत्र माता पृथिवीत्यनर्थान्तरम्। 'माता भूमिः पुत्रोऽहं पृथिव्याः' इत्याथर्वणश्रुतेः। पितृपदञ्च द्युलोकवाचकम्। तेन द्यावापृथिव्योरन्तराले गतिरुक्तेत्युपपन्नम्। तत्तत्कर्मलिप्तो जीवस्तत्तत्कर्मफलभोगाय मनुष्यलोकं प्रतिपद्यत इति श्रुतेराशयः।

**उत्तरायणम् :** अथोत्तरायणं विवव्रुः—

अथ ये हिंसामुत्सृज्य विद्यामाश्रित्य महत्तपस्तेपिरे ज्ञानोक्तानि वा कर्माणि कुर्वन्ति तेऽर्चिरभिसम्भवन्ति। अर्चिषोऽहरहन् आपूर्यमाणपक्षम्, आपूर्यमाणपक्षादुदगयनमुदगयनाद् देवलोकम्, देवलोकादादित्यम्, आदित्याद् वैद्युतम्, वैद्युतान्मानसम्। मानसः पुरुषो भूत्वा ब्रह्मलोकमभिसम्भवन्ति। ते न पुनरावर्तन्ते'[३]।

इदमुत्तरायणम्। एतेऽपि न सद्योमुक्ता भवन्ति, किं तर्हि, पूर्वोक्तं पितृलोकं नैव प्रतिपद्यन्ते। अयं हि कार्यब्रह्मणो लोकस्य मार्गः। ते च तत्र गत्वा ज्ञानार्जनं विधाय क्रममुक्तिभाजो भवन्ति। ये नाम दक्षिणायनं लभन्ते, ते मनुष्यलोकं प्रतिपद्यन्ते। किन्तु,

---

१. बृ.उ., शाङ्करभाष्यम्; २. निरुक्तम्, १४.८।

३. तत्रैव, १४.९।

'शिष्टा दन्दशूका य इदं न जानन्ति। तस्मादिदं वेदितव्यम्'[१]।

इह दन्दशूकपदं मनुष्येतरतिर्यगादिकीटपतङ्गादियोनिवाचकम्। अत्र च ये केवलं खादतमोदतां सिद्धान्तं मत्वा विसरन्ति, ते तु तिर्यगादियोनिं लभन्त इति फलितम्।

नात्मा जन्म वा नाशं वा लभते, किं तर्हि, तस्य लिङ्गशरीरं षोडशकलात्मकं पुनर्जन्म गृह्णाति। स्थूलशरीरस्य परित्यागमेव मरणमित्याचक्षते। तत्रापि नाकाशस्य गमनागमने भवतः, तस्य विभुत्वाद् वा सापेक्षतया जगति सर्वत्रावस्थितत्वाद् वा। वायुरपि प्राणादिरूपेण शरीरमभिव्याप्य तिष्ठति। शरीरान्ते प्राणवायुरेव बहिर्गच्छति। प्राणैः सहैव तेजोऽबन्नमयं स्थूलशरीरं त्यक्त्वा सूक्ष्मशरीरस्य पुनर्जन्म भवतीत्यद्वैतवेदान्तिनः। तत्रापि स्थूलशरीरे वा सूक्ष्मशरीरे वा कारणशरीरे वा चैतन्यमध्यारोप्य तस्य शरीरस्यात्मत्वमध्यस्यते।

## १०. विशिष्टाद्वैतवेदान्ते पुनर्भवः

अस्मिन् प्रस्थाने पुनर्भवस्य बीजं श्रीभाष्ये (३.२.४) स्पष्टीकृतं विद्यते। तदनुसारेण परमात्मनः सङ्कल्पादेव जीवस्य स्वाभाविकं कल्याणरूपं स्वरूपं तिरोधीयते। तेन बन्धः, बन्धेन च पुनर्भवः। ब्रह्मणः सङ्कल्पादेव कल्याणरूपतायाः प्राप्तौ सत्यां मोक्षोऽपि भवति। यथा चोक्तम्—

'पराभिधानात् परमपुरुषसङ्कल्पादस्य जीवस्य स्वाभाविकं रूपं तिरोहितमनादिकर्मपरम्परया कृतापराधस्य ह्यस्य स्वाभाविकं कल्याणरूपं परमपुरुषस्तिरोधापयति। ततस्तत्सङ्कल्पादेव ह्यस्य बन्धमोक्षौ श्रुतौ'[२]।

एवञ्च जीवानां त्रैविध्यमस्मिन् दर्शने विचारितम्, बद्धा मुक्ता नित्याश्चेति। तथा चोक्तम्—

'बद्धा इत्युच्यन्ते संसारिणः। मुक्ता निवृत्तसंसाराः। नित्या इत्युच्यन्ते कदापि संसारमप्राप्ताः'[३]।

इमे संसारिण एव सामान्यतया पुनर्भवभागिनो भवन्ति। तेन च कर्मफलभोगाय संसरन्ति। तत्र सुखदुःखादीनां प्रतीतिरेव भोगः। स च भोगो जीवकृतकर्मणां फलमेव। एवं प्रारब्धस्य भोगेन क्षयो भवति। यदि प्रायश्चित्तादीनां

---

१. निरुक्तम्।

२. ब्र.सू., श्रीभाष्यम्, ३.२.४;

३. तत्त्वत्रयम्, पृ. २३।

सञ्चितानां कर्मणामपि नाशो भवेत्, तर्हि मोक्षलाभ इत्येतेषामभिमानः। तथा चाह आचार्यो रामानन्दः—

'आरब्धकार्ये पुण्यपापे स्वारब्धफलभोगेन क्षपयित्वा तत्फलभोग-समाप्त्यनन्तरं ब्रह्म सम्पद्यते। ते च पुण्यपापे एकशरीरभोग्यफले चेत्, तच्छरीरावसाने सम्पद्यते। अनेकशरीरोपभोग्यफले चेत्, तदवसाने सम्पद्यते। भोगेनैव च क्षपयितव्यत्वादारब्धफलयोः कर्मणोः। .......भोगेन तयोः कर्मणोर्विमोक्ष उच्यते'[१]।

अस्मिन् प्रस्थाने ईश्वरीयसङ्कल्पादेव संसारबन्धनं पुनर्भवो वा भवतीति सर्वसम्मतम्।

## ११. शुद्धाद्वैतवेदान्ते पुनर्भवः

वल्लभाचार्यपादानां शुद्धाद्वैतवेदान्तेऽविद्याजनितबन्धः कर्मजनितो भवतीति गीतातत्त्वदीपिकायाम् (५.३) उक्तम्। कर्मजनितानां फलानां भोगाय जन्म गृह्यत इति कर्मशब्देन तत्र कर्मफलमुच्यते। पुरुषोत्तमगोस्वामिकृतायां तत्त्वदीपिकाटीकायां (१८.३०) भगवत्सेवाङ्गाभावे कर्मैव बन्धः। तथा चोपासनाङ्गभूतानि कर्माणि बन्धशब्देन न गृह्यन्ते। ब्रह्मसूत्रभाष्ये (३.२.५) वल्लभपादैर्बन्धस्य विपर्ययस्य च कारणं कल्याणगुणानां तिरोभाव इत्युक्तम्। परमेश्वर एव षड्गुणा विद्यन्ते—ऐश्वर्यम्, वीर्यम्, यशः, श्रीः, ज्ञानम्, वैराग्यञ्चेति। परमात्मनः सकाशाद् व्युच्चरणं प्राप्य यदा जीवः स्वरूपं लभते, तदैव गुणानामेतेषां तिरोभावो जायते। यथा अग्नेः स्फुलिङ्गा व्युच्चरिताः सन्तः पृथग् रूपं गृह्णन्ति। तथा जीवा अपि परमात्मनो व्युच्चरिताः सन्तः स्वरूपमश्नुवते। तथा हि—

१. ऐश्वर्यतिरोभावाद् दैन्यं पराधीनता।
२. वीर्यस्य तिरोभावाद् दुःखसहिष्णुता।
३. यशसस्तिरोभावेन हीनता।
४. श्रियस्तिरोभावेन सर्वासामापत्तीनां विषयता।
५. ज्ञानस्य तिरोभावेन देहादावात्मबुद्धिः, विपरीतज्ञानम्।
६. वैराग्यस्य तिरोभावेन विषयासक्तिरिति।

तत्रैवाणुभाष्ये स्पष्टीकृतं विद्यते—

---

१. ब्र.सू. श्रीभाष्यम्, ४.१.१९।

'बन्धश्चतुर्णां कार्यो विपर्ययो द्वयोस्तिरोभावात्। ऐश्वर्यवीर्ययशसां तिरोभावेन बन्धः। ज्ञानवैराग्ययोस्तिरोभावेन च विपर्ययः'[1]।

अत्रेदमवधेयम्—माया भगवतः शक्तिः। तया शक्त्या प्रपञ्चः सम्भवति। अविद्यया च शक्त्या जीवस्य संसरणं जायते। कर्मणां फलभोगाय जन्ममरणरूपसंसारः प्रभवति। 'पुनरपि जननं पुनरपि मरणम्' इत्येव संसारः। स एव बन्धो जीवस्य ममताहन्ते संसारं निष्पादयत इति संसार एव बन्धः।

अत्रेदं ध्यातव्यम्—ज्ञानेन भक्त्या च संसारो विनश्यति। प्रपञ्चस्तु नित्य एव। संसारप्रपञ्चयोरिदमन्तरं ज्ञात्वैव शुद्धाद्वैतवेदान्तो बुद्धिगतो भवति। अन्यदपि विविक्तं ज्ञातव्यम्। माया प्रपञ्चस्य जननी न तु बन्धस्य कारणम्। अविद्यया संसाररूपो बन्धो जायते। तत्त्वार्थदीपनिबन्धे भगवता वल्लभाचार्येणाविद्यायाः पञ्च पर्वाणि निरूपितानि। यथा—

> स्वरूपाज्ञानमेकं हि पर्व देहेन्द्रियासवः।
> अन्तःकरणमेषां हि चतुर्धाऽध्यास उच्यते॥
> पञ्चपर्वा त्वविद्येयं यद्बद्धो याति संसृतिम्[2]।

कारिकार्थस्तावद् कोष्ठकबन्धेन ज्ञातव्यः—




## १२. द्वैतवेदान्ते पुनर्भवः

आनन्दतीर्थपादानां द्वैतवेदान्ते परमेश्वर एव बन्धमोक्षयोः प्रदाता। स एव च स्वप्नस्येष्टं तिरोधापयति। तथा चोक्तम्—

> 'बन्धमोक्षप्रदत्वात् स एव स्वप्नस्तिरस्कर्ता'[3]।

भाष्यकारः कूर्मपुराणमुद्धृतवान्—

---

१. ब्र.सू. अणुभाष्यम्, ३.४;   २. तत्त्वार्थदीपनिबन्धः।
३. ब्र.सू. माध्वभाष्यम्, ३.२.५।

'स्वप्नादिसृष्टिकर्ता तिरस्कर्ता स एव तु।
तदिच्छया यतो ह्यस्य बन्धमोक्षौ व्यवस्थितौ'[१]॥

तैजस-विश्व-प्राज्ञभेदेन भगवान् संसारदशां प्रवर्तयति। वासुदेवरूपेण तुरीयेण स एव संसारं निवर्तयति। मोक्षं च सम्पादयति। तथा चोक्तम्—

'संसारावस्थाप्रवर्तकस्त्रिरूपो भगवान् अथ वासुदेवाख्यस्तुरीयस्तन्निवर्तको मोक्षावस्थाप्रवर्तकश्च'[२]।

अनेन स्पष्टमस्मिन् दर्शने संसार एव बन्धः। स च जाग्रत्स्वप्नसुषुप्त-मोहात्मकश्चतुरवस्थासम्पन्नः। भोगं मोक्षञ्चाधिकृत्यानन्दतीर्थेन प्रोक्तम्—

'आरब्धपुण्यपापस्य भोगेन क्षपणादनु।
प्राप्नोत्येवं तमो घटं ब्रह्म वा नात्र संशयः'[३]॥

अत्र प्रस्थाने जीवानां जीवब्रह्मणोश्च परस्परं स्वाभाविको भेदः स्वीकृतः। प्रतिजीवं स्वपुण्यपापरूपाणि कर्माणि सुखदुःखरूपं फलं व्यवस्थापयन्ति, एवं जीवभेदेन भोगभेदस्यापि व्यवस्थां प्रतिष्ठापयन्ति। अस्मिन् विषये चानन्दतीर्थेणोक्तम्—

'सुखदुःखादिभोगश्च, स्वरूपैक्ये न, भेदतः'[४] इति।

**१३. द्वैताद्वैतवेदान्ते पुनर्भवः**

निम्बार्काचार्याणां द्वैताद्वैतवेदान्तो माध्वानां द्वैतवेदान्तवदेव जीवेश्वरयोर्भेद-मङ्गीकरोति। ईश्वरः खलु सदा मुक्तः। तस्य मायया जीवो बद्ध उच्यते। एतच्छास्त्रप्रामाण्यादवगम्यते, बद्धः सन्नपि जीवो मोक्षस्य पात्रतां न जहाति। अनादिकर्मणां भोगेन क्षये जाते भगवत्कृपया स एव मुक्तो भवति। तथा चाहुः—

'बन्धमोक्षार्हता तेषां शास्त्रमानेन गम्यते।
अनादिकर्मरूपेण मायायोगेन यन्त्रिता॥
अहैतुक्या हरेर्विष्णोः कृपया चाथ संश्रयात्।
मुच्यते नात्र सन्देहस्तदुक्तेनैव वर्त्मना'[५]॥

अस्मिन् दर्शने कर्मैव बन्धः। कर्मणां च जीव एव कर्ता। तथा चोक्तम्—

---

१. तत्रैव, कूर्मपुराणस्योद्धरणम्;　　२. आनन्दमाला, पृ. १०४।
३. ब्र.सू. माध्वभाष्यम्, ४.१.१९;　　४. दप्र. भागः १, पृ. ६।
५. वेदान्तकारिकावली, १।

'बन्धकाले क्वचित् प्रोक्तं तस्याकर्तृत्वचिन्तनम्।
तत् स्वातन्त्र्यनिवृत्त्यर्थमभिमाननिवृत्तये'[१]॥

को नाम बन्धादेः कर्तेति जिज्ञासायामुच्यते—

'बन्धस्य मोक्षस्य तथाज्ञताया
ज्ञानस्य कर्ता नियतेश्च विष्णुः'[२]।

एवं कर्मानुसारेण संसाररूपबन्धस्य पुनर्भवस्य वा परमेश्वर एव प्रदातेति द्वैतवेदान्तवदेतेषामपि स्वीकृतिरिति।

## १४. अचिन्त्यभेदाभेदवेदान्ते पुनर्भवः

गौडीयवेदान्तधारायामचिन्त्यभेदाभेदवादः स्वीक्रियते। बन्धविषये, फलतः पुनर्जन्मविषये च द्वैतवेदान्तेन द्वैताद्वैतवेदान्तेन च साम्यमुपलभ्यते। तथापि किञ्चिद् वैमत्यमपि दृश्यते। तथा च बलदेवविद्याभूषणपादेनोक्तम्—

'एवं साम्येति वैषम्यमैहिकं कर्मभिः स्फुटम्।
प्राहुः पारत्रिकं तत्तु भक्तिभेदैः सुकोविदाः'[३]॥

अस्य प्रभाटीकायां स्पष्टीकृतम्—

'जीवः कर्मभिरस्मिञ्जगति उत्कृष्टापकृष्टभावं प्राप्नोति'[४]।

एवञ्चास्मिन्नपि दर्शने कर्मैव बन्धः। भोगेन कर्माणि समाप्य ईश्वरानुग्रहेण बन्धाद् मोक्षो भवतीति।

## १५. प्रत्यभिज्ञाशैवदर्शने पुनर्भवः

प्रत्यभिज्ञाशैवदर्शने बन्धस्य प्रकारान्तरेण व्यवस्था दृश्यते। अस्मिन् दर्शने जीवो मायाप्रमातेत्युच्यते। शक्तेः शिवाभिन्नायाः सङ्कुचितस्वरूपाया नाम मायेति। सा च माया पशुपतेः स्वरूपं सङ्कोचयति तदभिन्नत्वेन रागादिभिः पाशैर्बध्वा पशुत्वं नयति। अत एव जीवः पशुरिति निगद्यते। पशुपतिश्च परमेश्वर इति। अस्मिन् दर्शने भगवतः स्वातन्त्र्यशक्तेः प्रकाशरूपं पशुं पृथगिव कृत्वा प्रकाशयति, किन्तु न स्वस्वरूपात् पृथक् करोति। इत्येवं मायाप्रमाता पशुर्जीवो वा निर्मितिं लभते। तथा चोक्तम्—

---

१. वेदान्तसिद्धान्तसङ्ग्रहः, ३.२८; २. तत्रैव, ५.२।
३. प्रमेयरत्नावली, ६; ४. तत्रैव, टीका।

'अपरिगणित-सर्वभावनिर्भरो भगवान् स्वातन्त्र्याद् भावराशिमध्यात् कञ्चिद् भावं प्रकाशस्वरूपात् पृथक् करोति। पृथक्कृतञ्च प्रकाशयति। न च पृथक्-कृतस्य प्रकाशनोपपन्नेति न महाप्रकाशात् पृथक् करोति। अपि तु तथाविधमपरार्थप्रकाशरूपमारोपितप्रकाशं मायाप्रमातारं निर्मिमीते। तथा सङ्कोचेनावभासनमेव च भगवतः स्वात्मनि तन्निर्माणमुच्यते। एवञ्च मायाप्रमाता शरीराद्यवच्छिन्नसङ्कुचितप्रकाशस्वभावो भवन् स्वापेक्षया पृथग्भूतं भावमवभासयति। तद् नवनवतदीयच्छायोपरक्तमस्य बहिर्मुखं रूपं नवनवं ज्ञानमुच्यते। तत्र च यदैश्वरं स्वातन्त्र्यं सा ज्ञानशक्तिरिति'[१]।

इत्थं ज्ञानस्य सङ्कोच एव बन्धः। येनासीनः पशुर्जीवो वा मायाप्रमाता वा स्वरूपं गृह्णाति। तत्रापि त्रिंशत् तत्त्वानि मायाप्रमातारं निर्मिमते। तानि च माया, कञ्चुकपञ्चकम्, अन्तःकरणचतुष्टयम्, इन्द्रियदशकम्, तन्मात्रपञ्चकम्, भूतपञ्चकमिति संक्षेपः।

मायापरिग्रहादेव पुरुषः पशुर्भवति। पशुरित्यत्र जीवपर्यायः। यथा चोक्तं परमार्थसारे—

'मायापरिग्रहवशाद् बोधो मलिनः पुमान् पशुर्भवति।
कालकलानियतिवशाद् रागाविद्यावशेन सम्बद्धः'[२]॥

'मायायाः पाल्यः पाशश्चेति पशुः, आणवमायीयकार्ममलस्वभावानां पाशानां भाजनम्'[३]।

अस्मिन् दर्शने मलशब्देन पाश एव निगद्यते। आणवमलं, मायीयमलं कार्ममलञ्चेति त्रिधा मलरूपः पाशः परिगण्यते। यथा—'अणुः कर्म माया चेति त्रयः पाशाः'[४]।

तथा चोक्तं शिवसूत्रवार्तिके—

१. स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता।
२. द्विधाणवं मलमिदं स्वस्वरूपापहारतः।
३. भिन्नवेद्यप्रथात्रैव मायीयं जन्म भोगदम्।
४. कर्तर्यबोधे कार्मं तु, मायाशक्त्यैव तत् त्रयम्[५]।

---

१. ईश्वरप्रत्यभिज्ञाविवृतिः, १-३; २. परमार्थसारः, १६।
३. तत्रैव, योगराजवृत्तिः; ४. योगिनीहृदयदीपिका, ४३।
५. शिवसूत्रवार्तिकम्, १.२१-२२।

अपि च




'स्वाङ्गरूपेषु भावेषु पत्युर्ज्ञानं क्रिया च या।
मायातृतीये ते एव पशोः सत्त्वं रजस्तमः'[1]॥

इत्थं भगवान् परमशिव एव लीलाप्रभुरसंख्यपशुरूपेण पशुपतित्वं नाटयति। तस्य प्रकाशेनैव पुनर्भवो वा मोक्षो वा भवतीति।

## १६. काश्मीरविशिष्टाद्वैतशैवदर्शने पुनर्भवः

काश्मीरेऽपि विशिष्टाद्वैतवेदान्तस्य समानत्वं दधद् विशिष्टाद्वैतशैवदर्शनं प्रावर्तत। अस्मिन् दर्शने बन्धमोक्षौ परमेश्वरस्य सङ्कल्पेन जनितौ स्वीक्रियेते। तथा चाहुः—

'जीवस्यानाद्यपचारप्रवाहेण पराभिध्यानात् परमेश्वरसङ्कल्पात् तस्य सत्यसङ्कल्पत्वादिकं तिरोहितम्। तदपचारतदनुवृत्तिकृतात् तस्मादेव परमेश्वर-सङ्कल्पादस्य बन्धमोक्षौ भवतः'[2]।

बन्धेन संसार इति प्राङ् निरूपितमेव भवति। ईश्वरभक्त्यैव जीवो मोक्षभाजनतां लभते। अस्मिन् दर्शने अनादिरेव बन्धः। बन्धनिवृत्तिश्च ईश्वरानुग्रहेणेति—

'जीवस्य स्वरूपतिरोधानभावोऽपि देवमनुष्यादिदेहाकारचिद्योगाद् भवति सृष्टिसमये, प्रलये पुनर्नामरूपविभागानर्हसूक्ष्माकारचिद्योगात्'[3]।

अत्रापि कर्मणामेव बन्धहेतुत्वं भवति। जीवत्वस्य नित्यत्वेन मायीयमलस्य स्वीकृतिर्नैव विद्यते। स्वकृतपापपुण्याभ्यामेव बन्धः! बन्धमोक्षयोः कर्ता परमेश्वर इत्यलम्।

---

१. प्रत्यभिज्ञाहृदयम्, ५; २. ब्र.सू. श्रीकण्ठभाष्यम्, ३.२.५।
३. तत्रैव, ३.२.६।

## १७. काश्मीरद्वैतशैवदर्शने पुनर्भवः

काश्मीरद्वैतशैवदर्शने चित्तत्त्वस्य नित्यत्वेन कर्मणामावरणरूपेण स्वीकृतिर्नास्ति। तथा चोक्तं नरेश्वरपरीक्षायाम्—

'सिद्धमावरणं चान्यत् कर्माख्याद् भवबन्धनात्'[१]।

पुनर्जन्मविषये बन्धविषये वेदं शास्त्रं सांख्यदर्शनस्य नैकट्यं वहति। तथा चोक्तम्—

'बन्धनानि गुणान्तानि सांख्याद्यैर्भाषितान्यथ।
प्रधानादीनि चान्यानि शैवैरेवोदितानि तु'[२]॥

मायाकृतं मलमेवास्मिन् दर्शने बन्धो वा पाशो वा स्वीक्रियते। बन्धान्मोक्षश्च शिवानुग्रहेणैव भवति। यथा—

'स्वयं करोत्यणुर्नैतां पाशंरुद्धबलत्वतः।
पाशा अपि न कुर्वन्ति यतस्ते तन्निरोधकाः॥
न चापि बन्धनं बध्यं विमुञ्चद् दृश्यते यतः।
बलीयान् पशुपाशेभ्यस्तन्मोचकतया हरः'[३]॥

यावत् पशुर्जीवः पाशेन पाशितो भवति, न तावत् संसारान्मुक्तिः। पशुपाशाभ्यां बलवत्तरः परमेश्वर एव पशुपतिः पाशाद् मोक्षं वितरतीति।

## १८. नकुलीशपाशुपतदर्शने पुनर्भवः

अस्मिन् दर्शने पञ्च मलानि परिगणितानि सन्ति। तान्येव पाशो वा बन्धो वा निगद्यन्ते। यथा चोक्तम्—

'मिथ्याज्ञानमधर्मश्च शक्तिहेतुश्च्युतिस्तथा।
पशुत्वमूलं पञ्चैते तन्त्रे हेया विविक्तितः'[४]॥

इत्थं मोक्षप्रतिबन्धित्वाद् एतेषामेव बन्धत्वं स्वीकृतमस्तीति।

## १९. दाक्षिणात्यशैवदर्शने पुनर्भवः

अस्मिन् प्रस्थाने आणवमलं, पञ्च कर्माणि, माया च बन्धरूपेण परिणमन्ति। यद्यपि तिरोधायिका शक्तिः पाशवर्गे परिगणिता, तथापि परमेश्वरस्य

---

१. नरेश्वरपरीक्षा, १.६८; २. तत्रैव, १.६९।
३. तत्रैव, ३.१४६, १४९, ४. सदसं. पृ. १६३, उद्धरणम्।

तिरोधायिका शक्तिरियं केवलं बन्धस्यानुग्राहिका भवति, न तु बन्धस्वरूपा, किं तर्हि, असावेव शुद्धाध्वनः कारणभूततत्त्वरूपा। अत उक्तम्—

'अयं च शुद्धाध्वा न बन्धकः, कर्मान्वयाभावात्'[1]।

अत्र पाशबन्धौ नैव समानार्थकौ। मायायाः कार्यरूपैरेकत्रिंशत्तत्त्वैर्निर्मितं स्थूलसूक्ष्मशरीरं मायामलरूपं बन्धनाम्ना निगद्यते। तत्र स्थूलशरीरं पाञ्चभौतिकं सूक्ष्मशरीरञ्च पुर्यष्टकमिति कथ्यते। तथा हि—

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः।
मनो बुद्धिरहङ्कारः पुर्यष्टकमुदाहृतम्[2]॥

इदमपि व्याख्यानं त्रिंशत्तत्त्वानि आधारीकृत्य सर्वदर्शनसङ्ग्रहे कृतं विद्यते। यथा—

'पुर्यष्टकं नाम प्रतिपुरुषं नियतः सर्गादारभ्य कल्पान्तं मोक्षान्तं वा स्थितः पृथिव्यादिकालपर्यन्तः त्रिंशत्तत्त्वात्मकः सूक्ष्मो देहः'[3]।

इत्थं सप्त मलानि, पञ्च कर्माणि, त्रिंशत् सूक्ष्मतत्त्वानि सङ्घीभूय बन्धत्वेन कल्पन्ते। अपि चात्र पञ्चमहाभूतात्मकं स्थूलशरीरमस्थायिबन्धत्वेन निर्मितम्। एवं सप्तचत्वारिंशत्तत्त्वानां बन्धसमुच्चयो निर्मितो भवतीति।

## २०. शाक्तदर्शने पुनर्भवः

शाक्तदर्शनेऽपि प्रत्यभिज्ञादर्शनवदद्वया चितिरेव जगतः कारणम्। अद्वयपरकेऽस्मिन् दर्शने चितेरेव स्वरूपात्मिका प्रकृतिर्भवति। चित्तमपि तथैव। येन कर्मणां फलव्यवस्था जायते। फलभोगाय जीवो जन्मानि गृह्णाति जहाति च। इयं वासनानादिकर्मणामेव भवति। वासनानां सङ्घातश्च पुनर्भवाय प्रभवति। यथोक्तम्—

'चितिशक्तिमधिष्ठाय विचित्रानादिकर्मणाम्।
जनानां वासनापिण्डः स्थितः प्रकृतिरुच्यते।
फलं तु त्रिविधं यस्मात् कर्मणां सा त्रिरूपिणी।
अस्या अवस्थाभेदो हि चित्तमित्यभिधीयते'[4]॥

---

१. शैवपरिभाषा, पृ. ८५।
२. तत्रैव, पृ. १३१।
३. सदसं. १८४।
४. त्रिपुरारहस्यम्, १४. ७०-७१।

एवञ्च विमर्शशक्तिरेव सङ्कोचं गृहीत्वा माया भवति। मायैव आवरणरूपेण अज्ञानरूपेण वा अल्पज्ञतया वा परमां चितिं जीवरूपेण बहुधा वितनुते। अपि च अनाद्यविद्यया बद्धोऽयं जीवो वासनया संसरति।

शाक्तागमस्य प्रत्यभिज्ञादर्शनवदद्वैतपरता दृश्यते। जीवाः खलु पाशबद्धाः सन्तो जननमरणचक्रे भ्रमन्तीति शाक्तानामुद्घोषः—

'घृणा लज्जा भयं शङ्का जुगुप्सा चेति पञ्चमी।
कुलं शीलं तथा जातिरष्टौ पाशाः प्रकीर्तिताः।।
पाशबद्धो भवेज्जीवः पाशमुक्तः सदाशिवः'[1] ।।

शाक्तागमस्य ललामभूते ग्रन्थेऽस्मिन् त्रिपुरारहस्ये शुद्धचैतन्यस्वरूपा त्रिपुरा देवी स्वयमेव भक्तेभ्य ऋषिगणेभ्य उपदिशति—

'ममैश्वर्यन्तु ऋषयः पश्यध्वं सूक्ष्मया दृशा।
सर्वाश्रया सर्वगता चाप्यहं केवला चितिः।।
स्वमायया स्वमज्ञात्वा संसरन्ती चिरादहम्'[2] ।।

अपि च,

'आत्मैव मायया ज्ञातृज्ञानज्ञेयफलात्मना।
यावद् भाति भवेत् तावत् संसारो ह्यचलोपमः'[3] ।।

त्रिपुटीकृतं भेदं सर्वेऽप्यद्वैतिनोऽङ्गीकुर्वन्ति। तत् त्रिपुटीं विमृश्य यद् वक्ति त्रिपुरारहस्यम्, तदिह समाख्यायते—

'ज्ञाता ज्ञानं ज्ञेयमपि फलं चैकं यदा भवेत्।
तदा हि परमो मोक्षः सर्वभीतिविवर्जितः।।
ज्ञानं विकल्पसङ्कल्पहानं मौढ्यविवर्जितम्'[4] ।।

अत्रापि कर्मफलभोगाय पुनर्जन्मेति दिक्।

शाक्तानामपि न हि भोगं विहाय कश्चित् प्रवर्तत इति न्यायेन सर्वोऽपि सुखभोगाय यतते, दुःखञ्च जिहासते। जिहासाबुभुक्षयोर्मध्ये बन्धो ध्रुवं दधाति पदम्। लिप्साबुभुक्षे हि बन्धकारणम्। अतः शाक्तमुनीनां वचनम्—

---

१. योगिनीहृदयदीपिका, ७२; २. त्रिपुरारहस्यम्, २०. ४५-४६।
३. तत्रैव, २०.७६; ४. तत्रैव, २०.६७-७०।

'यथा मनोरथो बद्धः केनचिच्छत्रुणा स्वयम्।
ताड्यमानस्तर्ज्यमानो यावत् सङ्कल्पवर्जनम्॥
कुर्यात् तावत् ताडनं वा तर्जनं वापि लीयते।
किं तत्र शिष्यते बन्धस्तथात्रापि विभावय'[1]॥

अयं भावः—कोऽपि यदि शत्रुद्वारा ताडनस्य तर्जनस्य वा मनोराज्यं कुर्यात्, तदा मनोराज्यगतयोस्ताडनतर्जनयोर्न तावद् हानिर्भवति, यावत् तयोः सङ्कल्पं न जहीयात्। यथा पुनर्जन्मविषयेऽपि संसारबन्धो मनोरथरूपाणां सङ्कल्पानां कार्यं भवति। इदं मनोराज्यं मनोरथो वायं यावन्न त्यज्यते, तावद् अयमाभिलाषिको बन्धो न भवन्नपि भवत्येव। अयं च बन्धो नाद्य श्व एव केनचिन्निर्मितः, किं तर्हि, स्वसङ्कल्पनिर्मित एव। अभवन्नप्ययं बन्धः सङ्कल्पिनं पुरुषं न जहाति। अत एव जामदग्न्यं रामं सम्बोध्योक्तम्—

'कोऽयं बन्धः कथं वा स्यान्निर्मलस्य चिदात्मनः।
प्रतिबिम्बात्मकैः स्वात्मादर्शान्तःप्रविभावितैः॥
बन्धो यदि तदादर्शप्रतिबिम्बाग्निरादहेत्'[2]॥

मिथ्याप्ययं बन्धो मनोराज्येन सत्यतां लभते। तथा हि—

'एष एव महाबन्धो बन्धसत्यत्वनिश्चयः।
मृषा भीतस्य बालस्य यक्षग्रह इव स्थितः'[3]॥

अपि च सिद्धान्तः—

'बन्धस्य सत्यताबुद्धिर्मनसोऽस्तित्वनिश्चयः।
एतद् द्वयमृते नास्ति बन्धः कस्यापि कुत्रचित्'[4]॥

मिथ्यात्वं भोगलिप्सायाश्च सङ्कल्पकृतत्वं लक्षयित्वा सापेक्षभोगानां तृष्णायाः पूर्तिमेव हेमलेखां ब्रूते—

'एकमेव सुखं दुःखं कालदेशाकृतिर्भिदा।
जनयेदत्र तत् कस्मात् प्रतिष्ठाध्यवसायिनी'[5]॥

एवञ्च निरपेक्षतया न कोऽपि बन्धो न वा भोगः। सङ्कल्पजन्या एव बन्धा भोगाश्च। भोगा अपि व्यक्तिदेशकालसापेक्षा भवन्ति। आत्मा तु बन्धभोगाभ्यामुदासीनः कश्चन भवतीति सङ्क्षेपः।

---

१. त्रिपुरारहस्यम्, १८.१२१-१२२; २. तत्रैव, १८.१२६-१२७।
३. तत्रैव, १८.१३४; ४. तत्रैव, १८.१२७-१२८।
५. तत्रैव, ४.१२।

कारकाणां कर्मकरणाधिकरणानां सापेक्षा प्रतीतिर्भवति। यथा 'रामस्य बाणो रावणं जघान' इत्युक्ते बाणः कर्तृत्वं लभते। 'रामो बाणेन रावणं जघान' इत्युक्ते रामः कर्तृत्वं बाणश्च करणत्वं लभते। एवमेव बन्धमोक्षयोः सापेक्षत्वं विद्यते। उक्तरीत्या सङ्कल्पहेतुको बन्धः, बन्धहेतुकश्च सापेक्षभोगः। अनादिता च तेषां सङ्कल्पजन्यैव दृश्यते। कारकत्वञ्च नास्ति निश्चितम्, तथाप्यनादिमनोराज्यविहिते बन्धे भोगे च सङ्कल्पा एव कारकत्वं लभन्ते। पुरुषः कञ्चिद् भोगं मनोरथविषयीकृत्य कर्माणि कुर्वाणो भोगमुपादत्ते। कर्माणि भोगाय भवन्ति। भोगाश्च सुखदुःखरूपाः पुनः कर्माणि कारयन्ति। तानि कर्माणि धर्माधर्महेतुभूतानि पुनर्भोगं भाविनि जन्मनि प्रददति। एवञ्च भोगैः कर्माणि, कर्मभिश्च भोगाः परस्परं कारकत्वं हेतुत्वं वा लभन्ते। एकस्मिन् जन्मनि कर्मभोगयोः सापेक्षतां विचार्यानादिवासनाकृतानां बन्धानां भोगानाञ्च परम्पराऽवसीयते। यथा मृगमरीचिकासु जलधारा मिथ्यैव दृश्यते। मृगास्तामुद्दिश्य पिपासाशमनाय सायंकालपर्यन्तं धावन्ति। तावदेव मायाकृतेयं विचितिः प्राणिनं धावयति।

## २१. निष्कर्षः

पुनर्भवस्य विचारणीयत्वे प्रथमग्रासे चार्वाकदर्शनमापतति। एते मरणमेव मुक्तिं मन्वानाः पुनर्भवं नाङ्गीकुर्वन्ति। बौद्धाः स्कन्धपञ्चकेषु मिथ्यासङ्घातभूतेषु आत्मत्वारोपेण पुनर्जन्म व्यवस्थापयन्ति। जैना अस्मिन् विषये कार्मणशरीरं स्वीकृत्य पुनर्जन्म व्याख्यान्ति। स्थूलशरीरं च ते औदारिकशरीरमित्याहुः। सुखदुःखभोगायौदारिकशरीरमेव प्रभवति। मृत्युजन्मनोर्मध्ये कार्मणशरीरं कर्मभोगाय तदनुरूपमौदारिकशरीरं लब्धुं प्रसरति। काणादा गौतमीयाश्च नातिवाहिकशरीरमङ्गीचक्रुः। मीमांसका अपिताननुसरन्ति। शुभाशुभकर्मणां विपाकाय मन एव तत्तद्देहान् धारयितुं क्षमत इति। सांख्यानां मतेन नातिवाहिकशरीरं विना सूक्ष्मशरीरं पुनर्जन्मने प्रभवति। इदं चातिवाहिकशरीरं मरणानन्तरं जायते स्थूलदेहं दत्त्वा च निवर्तत इति। इयमेव वेदान्तिनां सम्मतिः। पातञ्जलास्तु भोगानुकूलस्थूलशरीरग्रहणाय यावन्ति कर्माणि प्रधानतया समर्थानि भवन्ति, तेषां सङ्घातः कर्माशयरूपेण सङ्घीभवति, तेन च कर्माशयेन या योनिर्लभ्यते तत्र तदनुरूपा एव वासनाः कर्माशयेनोद्बोध्यन्ते वासनाभिश्च भोगाः प्रसरन्तीति वदन्ति। शैवाः शाक्ताश्च अविद्यायाः सङ्कोचरूपं गृहीत्वा पुनर्भवव्यवस्थां विशदीकुर्वन्ति; परन्तु सर्वेषां मतेन प्रारब्धकर्मणां भोगादेव क्षय इति सिद्धान्त इति।

●

# संस्कृतवाङ्मये सैन्यविज्ञानम्

**डॉ॰ जनार्दनप्रसादपाण्डेयः**
साहित्याध्यापकः
वी.एन. मेहता-संस्कृतमहाविद्यालये
प्रतापगढस्थे (उ.प्र.)



कस्यापि राष्ट्रस्य रक्षा तद्देशीयनृपतिवर्गेष्वाधारिता तिष्ठति। नृपतयश्च राज्यसञ्चालनार्थं, प्रजानां परिपालनार्थं राष्ट्रमण्डलस्य निर्माणं कुर्वन्ति। यतो हि राष्ट्रसंरक्षणं तेषां मुख्यो धर्मो भवति। राष्ट्रसंरक्षणाभावे प्रजासु स्वेच्छाचारिता वर्धते। यथोक्तं महाकविना भासेन—

गोपहीना यथा गावो विलयं यान्त्यपालिताः।
तथा नृपतिहीनाश्च विलयं यान्ति वै प्रजाः।।

(प्रतिमानाटकम्, ३।१०)

**गुप्तचरव्यवस्था**

राज्यसंरक्षणे गुप्तचराणां महत्त्वपूर्णं स्थानं भवति। कौटिल्यमते पापाचारान्वेषणं कुनृपतिराज्यवृत्तान्तपरिज्ञानं प्रजाक्लेशादिविषये सम्यग्ज्ञानप्राप्तिः, राज्यपालनवृत्तेरवगमनं च प्रमुखं कार्यमासीत् तदानीं गुप्तचराणाम्।

कौटिलीयार्थशास्त्रे गुप्तचराणां नव भेदाः निरूपिताः सन्ति—

१. कापटिकः, २. उदास्थितः, ३. गृहपतिकः, ४. वैदेहकः, ५. तापसः, ६. सत्री, ७. तीक्ष्णः, ८. रसदः, ९. भिक्षुकी[१]।

राज्यसुव्यवस्थाया ज्ञानं प्रजानां सुखशान्त्यादिविषये परिज्ञानं मुख्यतया गुप्तचराधीनमासीत्। प्राचीनभारतीयशासनव्यवस्थायां गुप्तचरविभागस्योपयोगिता सर्वातिशायिनी आसीत्। तेषां गुप्तचराणां सङ्घटनं, गुप्तरहस्यपरिज्ञानं च

---

१. कौटिलीयार्थशास्त्रम्, १।६।१०।

सुव्यवस्थितमासीत्। तत्काले राष्ट्रियराजनीतिविषयकज्ञानं गुप्तचरमाध्यमेनैव नृपतयो ज्ञातुं समर्था भवन्ति स्म।

**सैनिकव्यवस्था**

संस्कृतवाङ्मयानुशीलनेन ज्ञायते यद् भारतीयमनीषिभि: स्वकीयासु विविधरचनासु तत्कालिकयुद्धपद्धतिसन्दर्भे सैन्यसङ्घटनविषये, विविधायुधप्रयोगेऽपि स्वकीयविचारा: प्रकटिता:।

वेदेषु पुराणेषु स्मृतिग्रन्थेषु काव्येषु नीतिग्रन्थेषु च सैन्यव्यवस्थासन्दर्भे यत्र तत्रोल्लेख: प्राप्यते।

ऋग्वेदे आर्यसेना 'पृतना'संज्ञया अभिधीयते। तदानीं पृतनाया विभागो द्विप्रकारक एवासीत्—

१. पत्तिसेनारूपेण।

२. रथसेनारूपेण।

वन्यपशुत्वाद्धस्तिसैन्योपयोगस्तदानीं निषिद्ध:। श्रीरामगोविन्दत्रिवेदि-महाशयमते रथेषु भटानामारोहणायाष्टस्थानानि भवन्ति स्म। षडश्वाश्च रथं वहन्ति स्म[1]।

पुराणकालीनसेनायां हस्त्यश्वरथपदातिसेना कर्मकरात्मकं बलमासीत्। मनुस्मृतौ षष्ठाङ्गबलस्योल्लेख: प्राप्यते[2], अष्टाङ्गबलस्योल्लेखो महाभारते शान्तिपर्वणि प्राप्यते। तत्र जलगुप्तचरक्षेत्रीयदिग्दर्शकभारवाहकसेनायाश्च समुल्लेखो वर्तते[3]। महाभारतस्योद्योगपर्वणि चिकित्साविभागस्यापि वर्णनं प्राप्यते। एषु सैन्यसमूहस्य गजसेनापेक्षया महत्त्वपूर्णं स्थानमासीत्। विराट्पर्वणि मत्स्यसेनायां ८००० रथिन: १००० गजा:, ६०,००० अश्वाश्च आसन्[4]। सैन्यविभाग: पत्ति:, सेनामुखं गुल्म:, गण:, वाहिनी, पृतना, चमू:, अनीकिनी, अक्षौहिणीरूपेण चासीत्। सम्प्रति पत्त्यादिसेनासु गजस्थादीनां संख्याविषये विविधाचार्याणां मतं प्रस्तूयते।

---

१. सैन्य अध्ययन, पृष्ठ २५, डॉ. बाबूराम पाण्डेय एवं प्रो. एन.डी. चौबे।

२. मनुस्मृति, ७।१८५।

३. महाभारत-शान्तिपर्व, ५९।४१ उद्धृत।

४. महाभारत-विराट्पर्व, पृ. २८।

भारतोक्तं पत्तिलक्षणं यथा—

एको गजो रथश्चैको नराः पञ्च पदातयः।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते।। इति।

यद्वा—

एको हस्ती एकश्च रथवरस्त्रय एव च तुरङ्गाः।
पञ्चैव च पदातय एषा पत्तिर्ज्ञातव्या।। इति।

अक्षौहिणीप्रमाणं यथा—

अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः।
संयुक्तानि सहस्राणि गजानामेकविंशतिः।। (२१८७० गजाः)
एवमेव तु संख्यानं रथानां कीर्तितं बुधैः।।
पञ्चषष्टिसहस्राणि षट् शतानि दशैव तु।। (२१८७० रथाः)
संख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरङ्गमैः।।
(६५६१० अश्वा रथाश्वान् विना)
नृणां शतसहस्राणि सहस्रेण तथा नव।
शतानि त्रीणि चान्यानि पञ्चाशच्च पदातयः।।
(१०९३५० पदातयः) इति।

भारतेऽक्षौहिणीमानं यथा—

अक्षौहिण्याः प्रमाणन्तु खाङ्गाष्टैकद्विकैर्गजैः।
रथैरेतैर्हयैस्त्रिघ्नैः पञ्चघ्नैश्च पदातिभिः।। इति।

'अङ्कानां वामतो गतिः' इत्यभियुक्तोक्तेः २१८७० गजाः, इयन्मिता एव रथाश्च, एतत्त्रिगुणिताः (२१८७० × ३ = ६५६१०) अश्वाः, गजसंख्या-पञ्चगुणिताः (२१८७० × ५ = १०९३५०) पदातय इति भारताशयः। हेमचन्द्राचार्यैरप्यक्षौहिणीमानं पूर्वोक्तसंख्याक्रमेणैवाङ्गीकृतम्; किन्तु पत्त्यादिक्रमो भिन्नस्तद्यथा—

एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका।
सेना सेनामुखं गुल्मो वाहिनी पृतना चमूः।।
अनीकिनी च पत्तेः स्यादिभाद्यैस्त्रिगुणैः क्रमात्।
दशानीकिन्यक्षौहिणी................................।।

इत्यभिधानचिन्तामणिः, ३।४१२-४१३।

भानुजिदीक्षितमतमेवात्र समीचीनं यद्वा 'अक्षौहिण्या......पदातयः' स्वटीकायां प्रमाणत्वेनोपन्यस्तसार्द्धत्रयश्लोकविरोधेन वदतोव्याघातात्, भारतहेमचन्द्राचार्योक्तिविरोधाच्च। महाक्षौहिणीप्रमाणं यथा—

खद्वयं निधिवेदाक्षिचन्द्राक्ष्यग्निहिमांशुभिः।
महाक्षौहिणिका प्रोक्ता संख्यागणितकोविदैः।। इति।

चम्पूरामायणे 'अलक्षत स.....' (युद्धकाण्डे, श्लो. ७९) इत्यस्यानन्तरं 'तत्क्षण......यातुधानपतिः' इति गद्यस्य टीकायां लिखितमक्षौहिणीप्रमाणमन्यदेव, तद्यथा—

'प्रयुतं नवसाहस्रं पञ्चाशत्त्रिशतं भटाः।
पदातं षष्टिसाहस्रं षट्छती दश वाजिनः।।
एकविंशतिसाहस्रं शतानामेकसप्ततिः।
द्विरदाः स्यन्दना यत्र साक्षौहिण्युच्यते बुधैः।। इति।

मङ्गलकोषे त्वेवमुक्तम्[1]—

नवनागसहस्राणि नागे नागे शतं रथाः।
रथे रथे शतं चाश्वा अश्वे अश्वे शतं नराः।। इति।

सेनाध्यक्षो राजाज्ञया युद्धकार्यं सम्पादयति स्म। सेनायाः श्रेष्ठतमोऽधिकारी अक्षौहिणीसेनापतिपदेन ज्ञायते स्म। महाभारतेऽर्जुनद्रुपदविराटधृष्टद्युम्नशिखण्डि-सात्यकिभीष्मपितामहादयः पृथक्पृथगक्षौहिणीपतय आसन्। सकलनिष्कर्षोऽत्र चक्रे द्रष्टव्यः—

**पत्त्यादिसेनाविशेषे गजरथादिसंख्याबोधकचक्रम्[2]**

| क्रमिकसंख्या | हैमोक्तसेना-विशेषसंज्ञाः | अमरोक्तसेना-विशेषसंज्ञाः | गजसंख्या | रथसंख्या | अश्वसंख्या (रथाश्वान् विहाय) | पदातिसंख्या | सर्वसङ्कलनम् |
|---|---|---|---|---|---|---|---|
| १. | पत्तिः | पत्तिः | १ | १ | ३ | ५ | १० |
| २. | सेना | सेनामुखम् | ३ | ३ | ९ | १५ | ३० |
| ३. | सेनामुखम् | गुल्मः | ९ | ९ | २७ | ४५ | ९० |

१. अमरकोष-मणिप्रभा-टिप्पणी, पृ. २९२-९३।
२. अमरकोष-मणिप्रभा-टिप्पणी, पृ. २९४।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ४. | गुल्मः | गणः | २७ | २७ | ८१ | १३४ | २७० |
| ५. | वाहिनी | वाहिनी | ८१ | ८१ | २४३ | ४०५ | ८१० |
| ६. | पृतना | पृतना | २४३ | २४३ | ७२९ | १२१५ | २४३० |
| ७. | चमूः | चमूः | ७२९ | ७२९ | २१८७ | ३६४५ | ७२९० |
| ८. | अनीकिनी | अनीकिनी | २१८७ | २१८७ | ६५६१ | १०९३४ | २१८७० |
| ९. | * | दशानीकिनी (महेश्वर-मतेनेदम्) | ६५६१ | ६५६१ | १९६८३ | ३२८०५ | ६५६१० |
| १०. | * | अक्षौहिणी (महेश्वर-मतेनेदम्) | १९६८३ | १९६८३ | ५९०४९ | ९८४१५ | १९६८३० |
| ११. | अक्षौहिणी | अक्षौहिणी (भानुजि-दीक्षितमतेनेदम्) | २१८७० | २१८७० | ६५६१० | १०९३५० | २१८७०० |
| १२. | * | महाक्षौहिणी (महेश्वर-व्याख्योक्ता) | १३२१२४९० | १३२१२४९० | ३९६३७४७० | ६६०६२४५० | १३२१२४९०० |

## प्रशिक्षणव्यवस्था

महाकाव्यकाले पुराणकाले वा सैनिकप्रशिक्षणविषयेऽप्युल्लेखः प्राप्यते। तदानीमाश्रमेषु शिक्षाकेन्द्रस्य व्यवस्थासीत्। महाभारते आदिपर्वणि एकस्य विश्वविद्यालयस्योल्लेखो वर्तते। यस्तु नगराद्दूरे वने स्थापितः। यत्र समागत्य नवयुवका अन्यविषयैः सह सैन्यविज्ञानस्यापि शिक्षां गृहीतवन्तः। क्षत्रियबालकानां कृते सैन्यप्रशिक्षणस्य नियमः प्रचलितः।

रामायणकालस्य श्रीरामो महाभारतकालस्याभिमन्युः प्रमाणत्वेन मन्यते। सैन्यशिक्षकाचार्यरूपेण विश्वामित्रस्य द्रोणाचार्यस्य वा नामोल्लेखः कर्तुं शक्यते। युद्धक्षेत्रे विविधप्रकारैः सेना सज्जीकृत्य व्यूहाकारेण युद्धाय प्रेष्यते स्म। मनुस्मृतौ भयसमये खड्गव्यूहपार्श्वव्यूहवाराहव्यूहगरुडव्यूहमयूरव्यूहादिविविधव्यूहानां वर्णनं वर्तते। अभिमुखे समुपस्थिते भये सूचीमुखव्यूहसेनायाः प्रस्थानस्य नियम आसीत्।

१. रथसेनापदातिसेनाश्वसेनानां कृते उत्तमभूमेरावश्यकता भवति।[१]

२. १. शत्रुः, २. मित्रम्, ३. शत्रोर्मित्रम्, ४. मित्रस्य मित्रम्, ५. शत्रोर्मित्रस्य मित्रम्, एते पञ्च सेनायामग्रगामिनो भवन्ति। उक्तञ्च—

---

१. मनुस्मृतिः, ७।१८७-१९१।

अरिमित्रमरेर्मित्रं मित्रामित्रमतः परम्।
तथारिमित्रमित्रं च विजिगीषोः पुरस्सराः॥
(शिशुपालवधम्-२।८१ मल्लिनाथटीका)

३. पार्ष्णिग्राहः, आक्रन्दः, पार्ष्णिग्राहसारः, आक्रन्दसारश्च। एते चत्वारो विजिगीषोर्नृपस्य पृष्ठभागानुवर्तिनो भूत्वा साहाय्यमाचरन्ति। यथोक्तम्—

पार्ष्णिग्राहस्तु तत्पश्चादाक्रन्दस्तदनन्तरम्।
आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः॥
(शिशुपालवधम्-२।८१ मल्लिनाथटीका)

४. उदासीनस्तु मण्डलाद् बहिर्भवति। मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः।
(शिशुपालवधम्-२।८१ मल्लिनाथटीका)

अर्थशास्त्रे १०।१५८,१५९।१३४ स्कन्धावारसुरक्षाविषयेऽपि विचारः कृतः।

१. स्कन्धावारस्य निकटे सैन्यसंरक्षणार्थं परिखादीनां व्यवस्था।
२. स्कन्धावारस्य निकटे जलाशयस्य व्यवस्था।
३. स्कन्धावारस्य समीपे शासकीयकार्यालयादीनां व्यवस्था।
४. मौलभृतकगजाश्वसेनादीनां व्यवस्था।
५. स्कन्धावाराद् बहिर्मित्रबलानां व्यवस्था।
६. स्कन्धावाराद् बहिः अमित्रबलानामापणानां व्यवस्था।
७. स्कन्धावारस्य निकटे प्रहरीणां व्यवस्था तदानीं प्रचलिताऽऽसीत्।
८. विजिगीषुर्दशमः।
९. मध्यमस्तूभयोर्वधे समर्थो भवति, यथा—

अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः।
अनुग्रहग्रहे संहतयोः समर्थो व्यस्तयोर्वधे॥
(शिशुपालवधम्-२।८१ मल्लिनाथटीका)

**युद्धव्यवस्था**

महाभारतकाले काव्यकाले च युद्धस्य प्रयोजनं यशःप्राप्तिः, स्त्रीहरणं, भूमिहरणं, सम्पत्तिहरणं वाऽऽसीत्। यशसे विजिगीषा तत्कालीनक्षत्रियाणां मुख्यो

धर्म आसीत्।[1] रावणः सीताहरणं चकार। श्रीकृष्णो रुक्मिणीहरणं कृतवान्। कौरवपाण्डवानां युद्धं भूम्यर्थमेव जातम्। काव्यकाले, पुराणकाले च युद्धस्य केचन नियमा निर्धारिता आसन्[2]।

१. अधीनतास्वीकारे युद्धविरामः।

२. कवचधारिणा सह कवचधारिणां युद्धं भवति, न तु कवचहीनेन।

३. पदातिभिः सह पदातियुद्धम्।

४. रथिभिः सह रथिकानां युद्धम्।

५. विषयुक्ताः शङ्कुयुक्ताश्च बाणा निषिद्धा आसन्।

६. युद्धविमुखाः पददलिता दर्शकाश्च अवध्या आसन्।

७. शरणागतानां कृते अभयदानम्।

८. शस्त्रहीनेषु, ब्राह्मणेषु, स्त्रीषु च शस्त्रप्रहारो वर्जित आसीत्।

९. रुग्णेषु कारागारस्थेषु शस्त्रपीडितेषु जनेषु च सद्व्यवहार आवश्यक आसीत्।

१०. सूर्योदयेन सह युद्धारम्भः, सूर्यास्तेन सह विरामः।

११. कटितोऽधोभागे प्रहारो वर्जितः।

१२. नृपाणां युद्धं नृपतिभिः सहैव भवति स्म।

१३. सुप्तं, नग्नं, निरायुधम्, अयुध्यमानं, प्रेक्षकम्, अन्येन सह युध्यमानं च न हन्यात्।[3]

१४. स्वयं रथस्थो रथं त्यक्त्वा स्थलारूढं न हन्यात्।[4]

१५. भग्नखड्गाद्यायुधं, पुत्रशोकादिनार्तं, बहुप्रहाराकुलं, भीतं, युद्धपराङ्मुखं, शिष्टक्षत्रियाणां धर्मं स्मरन् न हन्यात्।[5]

१६. कूटयुद्धनिषेधस्यापि व्यवस्था तदानीं प्रचलिता आसीत्। कूटान्यायुधानि बहिः काष्ठादिमयान्यन्तर्गुप्तनिशितशस्त्राण्येतैः समरे युध्यमानः शत्रुं न हन्यात्। नापि कर्ष्याकारफलकैर्बाणैः, नापि विषाक्तैः, नापि अग्निदीप्तफलकैर्वा हन्यात्।[6]

---

१. रघुवंशमहाकाव्यम, प्रथमः सर्गः; २. मनुस्मृतिः, ७।९०।
३. तत्रैव, ७।९१; ४. तत्रैव, ७।९२।
५. तत्रैव, ७।९३; ६. तत्रैव, ७।९४।

**सैन्यसन्धिव्यवस्था**

कौटिलीयार्थशास्त्रे सैन्यसन्धिसन्दर्भेऽपि विचारः कृतः। सन्धिरयं मुख्यरूपेण चतुर्धा भवति—

१. मित्रसन्धिः।

२. हिरण्यसन्धिः।

३. भूमिसन्धिः।

४. अनवसितसन्धिः।

इत्थं मित्रहिरण्यभूमिकर्मरूपेण चतुर्धा सन्धिप्रकारः प्रदर्शितः।[१]

१. यस्तु चञ्चलप्रकृतिर्भवति तेन सार्धमर्थदानेन कालक्षेपः करणीयः, अवसरे सति सन्धिभङ्गः कार्यः।

२. धूर्तमित्रं कपटेन हन्यात्।

३. उदासीनमित्रेण सामन्तैः सह विरोधः कार्यः।

४. दुर्बलं मित्रं सैन्यसाहाय्यप्रदानेन उपकर्तव्यम्।

५. यस्तु विजिगीषोर्नृपस्यापकारं चिन्तयति तन्मित्रं विश्वस्याङ्कमुपस्थितम् उच्छिद्यादेव।

६. विजिगीषोर्नृपस्य शत्रुर्यदि विजिगीषोर्मित्रमापद्ग्रस्तमेवावगत्य साहाय्यं करोति, तर्हि व्यसने नष्टे सति तेनैव मित्रेण सह विजिगीषोः शत्रुर्वशे करणीयः।

७. विजिगीषोर्नृपस्य कृते वृद्धिः, क्षयं, स्थानं, कर्षणम्, उच्छेदनं तथा सामाद्युपायप्रयोगे अवधानमावश्यकम्।

८. यो नृपोऽन्योन्यसञ्चारं षाड्गुण्यमनुपश्यति, स बुद्धिनिगडैर्बद्धैः पार्थिवैः सह स्वेच्छया क्रीडति।[२]

९. वेणीसंहारनाटके भूमिविषयकसन्धिसमुल्लेखः प्राप्यते।[३]

१०. महाकविना माघेनोक्तं यद् उपकर्त्रारिणा सन्धिर्न कार्यः।[४]

महाकविभारवेः कथनमस्ति यत्—आत्मोत्कर्षकाले सन्धिर्न कार्यः, विहित-सन्धावपि दोषारोपणं विधाय सन्धिरस्वीकरणीयः।

---

१. कौटिलीयार्थशास्त्रम् ९।१२ प्रकरणम् ११६, पृ. २९२-३१९।

२. कौटिलीयार्थशास्त्रम्, अधिकरणम् ७, प्रकरणम् १२४-१२६, अध्यायः १८, पृ. ५४९-५५० एवं श्रीवाचस्पतिगैरोला।

३. वेणीसंहारनाटकम्, १।१६; ४. शिशुपालवधम्, २।३७।

अतोऽस्माभिर्वक्तुं शक्यते यद् देशकालादिविषये सम्यक् परिज्ञानं विधाय सन्धिः करणीयोऽस्वीकरणीयो वा। क्वचित् पुरुषसन्धिरपि भवति यथा सेनापतिकुमारलक्षणपुरुषविशेषार्पणेन शत्रुसाधनात्। अयमेव सन्धिरात्मरक्षण इत्यप्युच्यते। अयं सन्धिः पुरुषान्तरनामधेयः[१]।

**शस्त्रव्यवस्था**

प्राचीनसंस्कृतग्रन्थेषु शस्त्र-व्यवस्था-विषयकसमुल्लेखः प्राप्यते।

वैशम्पायनेन नीतिप्रकाशिकायामा[३]युधानां वर्गीकरणं चतुर्धा कृतम्।

**मुक्तायुधानि**—शक्तयः, भिन्दिपालाः, दुघ्नं, चक्रं, तोमरः, नालिकम्, लगुडम्, पाशाश्च।

**अमुक्तायुधानि**—वज्रः, परशुः, गदा, असिधनुः, कुन्तः, खड्गः, प्रासः, पिनाकः, मुद्गरः, पट्टिशं, परिघा च।

**मुक्तामुक्तायुधानि**—नालीकं धनुः, बाणः, कृपाणः, कुन्तकाः।

**मन्त्रप्रयुक्तायुधानि**—ब्रह्मास्त्रं नारायणास्त्रं बाणास्त्रम्। महामतिना कौटिल्येन गत्याकृतिरूपेणापि शस्त्राणां वर्गीकरणं कृतम्।

**कौटिल्यमते शस्त्राणि**

सर्वतोभद्रजामदग्न्यबाहुमुखविश्वासघातिसङ्घाटीयानकपर्जन्यकबाहूर्ध्वबाह्वर्ध-बाहूनि स्थितयन्त्राणि।[२]

**चलयन्त्राणि**

पञ्चालिक-देवदण्डसूकरिका-मूसलयष्टि-हस्तिवारक-तालवृन्त-मुद्गर-द्रुघण-गदा-स्पृक्त-कुद्दालास्फोटिमोद्घाटिमोत्पाटिम-शतघ्नी-त्रिशूल-चक्राणि चलयन्त्राणि।[३]

**आकृतिमूलकयन्त्राणि**

शक्तिप्रासकुन्तहाटकभिण्डिपालशूलतोमरवराहकर्णककणपकर्पणत्रासिकादीनि च हलमुखानि[४]।

---

१. किरातर्जुनीयम्, १।४५।

२. कौटिलीयार्थशास्त्रम्, अधिकरणम् ७, प्रकरणम्, १०१-१०२।

३. नीतिप्रकाशिका, अध्यायः ३ तथा ४, डॉ. बाबूरामपाण्डेयः, बी.एन.डी. चौबे, पृ. ७४।

४. अर्थशास्त्रम्, २।३४।१८।

बेणीसंहारे (१।२१) गदासञ्चालनविषयेऽपि उल्लेखो वर्तते। रघुवंशमहाकाव्ये (३।५६-५७, ५९) पक्षिपक्षसन्नद्धबाणप्रयोगविषये उल्लेखो वर्तते। यत्र शङ्कुसदृशा भल्लसदृशा अर्धचन्द्राकाराश्च बाणा वर्णिताः सन्ति।

## सुरक्षायन्त्राणि

लोहजाललोहजालिकापट्टकवचसूत्रकङ्कटशिंशुमारकखड्गधेनुकहस्तिगोचर्मखुर-शृङ्गसङ्घातवर्माणि। शिरस्त्राणकण्ठत्राणकूर्पासकञ्चुकवारबाणपट्टनागौरिका।

इत्थं विवेचनेन ज्ञायते यत् संस्कृतवाङ्मये शत्रुवधोपयोगिनां शस्त्राणामुल्लेखस्तु प्राप्यत एव; किन्त्वात्मसुरक्षादृष्ट्याऽपि शरीररक्षार्थं यन्त्राणां वर्णनं प्राचुर्येणोपलभ्यते।

शोधपत्रसर्वेक्षणेन ज्ञायते यत् संस्कृतवाङ्मये सैन्यविज्ञानसम्बन्धिनो विषयाः प्रचुरमात्रायां वर्णिताः सन्ति। तत्र हि राजमण्डलनिर्माणविषये, गुप्तचरविषये, दूतसम्प्रेषणविषये, सैनिकनियुक्तिविषये, प्रशिक्षणविषये, युद्धव्यवस्थाविषये, सन्धिविग्रहादिविषय उल्लेखः प्राप्यत एवेति दिक्।



# दूतकाव्यविमर्शः

**डॉ० कमलेशझाः**
व्याख्याता, साहित्यस्य
रानीपद्मावती-तारा-योगतन्त्र-आदर्शसंस्कृतमहाविद्यालये
इन्द्रपुरम्, शिवपुरम्, वाराणसी



**दूतकाव्यस्योत्पत्तिः**

उपलभ्यमानेषु दूतकाव्येषु कालिदासकृतं मेघदूतमेव प्राचीनतमं रचनापटुतया प्रधानतममेव पदमध्यास्ते सुरभारत्यामिति तु निर्विवादमेव। महाकविना कालिदासेन चेदृशकाव्यनिर्माणकल्पना स्वयमेव उद्भाविता पुराणादिषूपवर्णितादाख्यानाद् ग्रन्थान्तराद् वा समधिगता इत्यत्र विषये न किमपि पार्यते प्रतिपादयितुं निःसंशयम्। परं कालिदासात् प्राक्तनेऽपि काले अचेतनानां दूतत्वं कल्पितमेव। तथा च ऋग्वेदे पणीनां सविधे कुक्कुररूपायाः सरमाया दूतीरूपेण प्रेषणमुपनिबद्धम्। श्रूयते नागार्जुनग्रन्थस्य कस्यचित् चैनिकभाषायामनुवादकर्ता Hsii Kan नामधेयः चैनिककविः ख्रिष्टीयद्वितीयशताब्द्यामेव मेघस्य दूतत्वं कल्पयामास। कामविलापसंज्ञके च बौद्धजातके कामिना केनचित् काकस्य चेतनावतोऽपि अज्ञानस्य दूतत्वमङ्गीकृतम्। वाचकानां सुखावबोधाय तज्जातकं निखिलमेवात्रोद्ध्रियते—

**कामविलापजातकम्**

तं पण पुरिसं जीवसूत्रे उत्तासेसुं। सो तत्थ णिसिन्नो गच्छन्तं काकं दिस्वा ताव खरं पितं वेदणं अगणेत्वा पियमरियाय सासणं पेसेतुं काकं आमन्तेन्तो इमा गाथा आहा—

उच्चे सकुल ओमाण पत्रयाण विहङ्गम।
व्रजसि खो त्वं वामुरुं चिरं खो सा करिस्सति।।

इदं खो सा न जाणाति असिं अतिञ्च च ओङ्कितं।
सा चण्डी काहति क्रोधं तम्मे तपति नो इध॥

एस उप्पल सण्णाहो णिकरवं उस्मीसके कतं।
कास्रियञ् च मुदुं वत्थं तप्पतु घणकामिया॥

महाभारते च नलसकाशादागतं राजहंसं दमयन्ती नलं सविधे प्रेषितवतीति उपवर्णितम्। रामायणे च रामेण सीतान्तिके दूतस्य हनुमतः प्रेषणं समुपनिबद्धम्। एतावता प्रतिभाति यथा कालिदासात् पूर्वमपि केचन चेतनावतां जन्तूनामचेतनानां •वा वस्तूनां दूतत्वं कल्पितवन्तः। एतेभ्य एव कालिदासेन दूतकाव्यप्रणयनप्रवृत्तिरासादितो न वेति न प्रतिपादयितुमीशाः केऽपि। परं सीतां प्रति रामस्य हनुमत्सन्देशं मनसि निधाय मेघसन्देशं कविः कृतवान् इत्याहुरिति मल्लिनाथेन मेघदूताद्यश्लोकीयटीकायामुपन्यस्तमिति हनुमतो दौत्यमेव मेघदूतत्वकल्पने निदानमिति प्राचीनानां मतमिति स्फुटम्। 'इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा' इति मेघदूतवचनमप्येतदेव मतमनुकूलयतीवेति प्रतीयते। परं तत्र हनुमतो मानवस्येव ज्ञानवत्तादीनामुपवर्णनात्, महाभारते च हंसस्य तथात्वप्रतिपादनात् काव्यरसासद्भावतया जातकवृत्तान्ततः चैनिककविकृतितोऽपि वा कालिदासेन दृश्यकाव्यनिर्माणधारणाधिगता भवेदिति प्रतिभाति। परमेतदपि नासम्भवि यथा—कविवरेण स्वत एव समुद्भावितमेतदिति। यथा तथा वा भवतु कालिदासीयमेव वस्तु सर्वेभ्योऽपि रामायणादिगतदृश्यवस्तुभ्यो रमणीयकत्वादिना परमं स्थानमधिकुर्वद् विराजत इत्यत्र न संशयो लेशतोऽपि पदं करोति।

श्रीमद्भागवते दशमस्कन्धे सप्तचत्वारिंशत्तमेऽध्याये समुपवर्णितमुद्धवस्य दौत्यं द्विपञ्चाशत्तमे चाध्याये समुपन्यस्तस्य वृद्धद्विजस्य दौत्यं शृङ्गाररसविषयकमपि कालिदासकाव्यात् प्राचीनं कालिदासानुकरणजन्यं वेत्यत्र महानेव समुल्लसति संशयः सुमनसां मानसपटे। एतच्चात्रावधेयं यथा दूतकाव्यमूलभूतानामिव प्राचीनप्राचीनानां रामायणमहाभारतोपवर्णितानां रामदमयन्तीप्रेषितानां हनुमद्धंसानां दौत्यमुपाश्रित्य न केनाप्यर्वाचीनेन कविना दूतकाव्यं किञ्चिदपि ग्रथितमस्माभिरिदानीमप्युपलब्धम्। विषयान्तराणामितरेषां बहूनामपि दूतकाव्यावलम्बनभूतत्वे ईदृशानां रमणीयविषयाणामुपेक्षणीयत्वे न कारणं किमप्युत्पश्यामः।

**कालिदासानुकृतिः**

यथा तथा वा भवतु, एवन्तु निश्चिततयैव प्रतीयते यथा कालिदासेनैव महाकविचूडामणिना सुरभारत्यां दूतकाव्यप्रणयनं प्रवर्तितमादाविति। एतदपि च निर्विवादं यथा कालिदासादनन्तरं बहुभिरेव सुरसरस्वतीनन्दनैः कविवरैरीदृश-काव्यस्य चमत्कारिव्यतिरेकमुपलभमानैरनेकधा कालिदासानुकृतिमुखेन दूतकाव्यानि विविधानि विरचितानीति। तेषु चार्वाचीनेषु वस्तुषु कालिदासानुकरणस्यानुभूय-मानत्वेऽपि बहुत्रैव कवित्वमाधुर्यं महदेव विलसतीति निःशङ्कं वचः। कालिदासानुकृतिषु चोपलभ्यमानेषु धोयीककविराजविरचितं पवनदूतमेव प्राचीनतममिति प्रतिभाति। परमासाद्यमानानामपि बहूनामेव दूतकाव्यानां कालस्यानिर्णीतत्वान्नैतद् दाढर्येन प्रतिपादयितुमीशा वयम्।

सुप्राचीनालङ्कारिकभामहकृते च ग्रन्थे भ्रमरादीनामचेतनानां दूतत्वकल्पनमयुक्तमिति समुल्लिखितत्वाद् धोयितः प्राक्तनेऽपि काले कालिदासानुकृतिरूपाणि दूतकाव्यान्यासन् इति निश्चितमनुमातुं प्रभवामः। तथा च भामहवाक्यम्—

अयुक्तिमद् यथा दूता जलभृन्मारुतेन्दवः।
तथा भ्रमरहारीतचक्रवाकशुकादयः।।

अवाचोऽव्यक्तवाचश्च दूरदेशविचारिणः।
कथं दूत्यं प्रपद्येरन्निति युक्त्या न युज्यते।।

यदि चोत्कण्ठया यत्तदुन्मत्त इव भाषते।
तथा भवतु भूम्नेदं सुमेधोभिः प्रयुज्यते।।

(भामहालङ्कारे, १।४२-४४)

पण्डितवर्येण कीथमहोदयेनोक्तं (क्लासिकल संस्कृत लिटरेचर, षट्त्रिंशत्पृष्ठे) यथा—वत्सभट्टिनैवादावनुकृतं मेघदूतमिति तत्तु भ्रमर-विजृम्भितमित्यनुमीयते, वत्सभट्टिरचिते केवलकृतौ दशपुरशासने ऋतुसंहारस्यैव सादृश्योपलम्भात्। चित्रमेतद्द्रष्टव्यं यथार्वाचीनैः कविभिर्न केवलं कालिदास-भावभाषाविषयाणामेवानुकरणं कृतं परं कालिदासप्रयुक्तं छन्दोऽपि तैः परिगृहीतम्। तथा च दूतकाव्येषु प्रायेण सर्वेष्वेव कालिदासमेघदूते इव मन्दाक्रान्ताच्छन्द एव प्रयुज्यते।

**दूतकाव्यपरिणतिः**

निखिलमेव वस्तुजातमिह जगत्यां कालसहकारेण यथा कथञ्चित् परिवर्तनादिकं भजत्येवेति सामान्यो नियमः। न चास्य नियमस्य व्यतिक्रमो लेशतोऽपि कश्चिद् दूतकाव्यविषयेऽनुभूयते। तथा च कालक्रमेण कालिदासानुकृतिष्वपि दूतकाव्येषु परिवर्तनादिकं पदं कृतवदेव। एतच्च दूतकाव्यगतरसविषयादिषु सर्वत्रैव समुपलभ्यते। एवञ्च प्राचीनेषु दूतकाव्येषु मेघपवनादीनामचेतनानामपि गतिमतां वस्तूनां दूतत्वपरिकल्पनं ततश्च चेतनावतामप्यविज्ञातमानवभावानां शुकचातकादीनां दूतत्वनिरूपणमनन्तरञ्च दौत्यकर्मकुशलस्य मानुषस्यैव दूतरूपेण दयितानामन्तिके प्रेषणम् (यथोद्धवदूतादौ), क्रमेण च भक्तिप्रभृतीनां गुणानामपि दूतत्वं सम्पादितं भक्तिदूतादौ। इत्येवं दूतनिश्चयविधौ कालेन दूतकाव्यकृतां कविवराणां साधारणानामुपयोगितया धर्ममतप्रकटनरूपाभिलाषविशेषो दूतकाव्यपरिणतिविधौ महत् साहाय्यं समपादयत्। अपरञ्च प्राचीनेषु दूतकाव्येषु प्रधानतया विलसतो विप्रलम्भशृङ्गारस्य स्थले दूतकाव्यद्वारा 'शिवेतरक्षतिं' सम्पादयितुकामैर्जनानां धर्मोत्कर्षं विधातुकामैः कविमुख्यैः क्रमेण शान्तस्यैव रसस्य प्राधान्यमुपपादितम्। एतच्च अदूतकाव्येऽपि जिनसेनकृतौ पार्श्वाभ्युदये आदावुपलभामहे।

मनोदूतभक्तिदूतादौ चैतस्य दरीदृश्यते पूर्णा परिणतिः। तथा च क्रमेण भक्तिदूतादौ दूतकाव्यव्याजेन मानसोत्कर्षविधायकानां गुणविशेषाणामेवालोचनं कृतमित्यहो चिन्तापरिणतिः शृङ्गाररसात्मकस्य शृङ्गाराङ्गीभूतदूतप्रेषणप्रधानस्य दूतकाव्यस्य।

एवं दूतकाव्यपरिणतिविधौ जैनकवीनां साहाय्यं सर्वथैवाङ्गीकर्तव्यम्। दूतकाव्यद्वारा धर्मोत्कर्षसम्पादनवासना तेषामेव ग्रन्थेषु पार्श्वाभ्युदयनेमिदूतादिषु प्रथमतः प्रकटीभवति। अपरञ्च दूतकाव्यप्रणयनविधौ यन्नाम रचनापाटवं तैः प्रदर्शितं तत्तु नितरामेव विस्मयपदम्। प्रथमतस्तावद् यथा पार्श्वाभ्युदये पार्श्वनाथ-चरित्रोपवर्णनात्मके ग्रन्थे निखिलमेव मेघदूतमन्तर्भवति तत्तूक्तपूर्वमेव।

नेमिदूताख्ये च नेमिनाथचरित्रोपवर्णनात्मके जैनकविप्रणीते दूतकाव्यान्तरे प्रतिश्लोकं मेघदूतगतप्रतिश्लोकान्तिमपाद एवान्तिमपादरूपेण प्रयुक्त इति यत्

सत्यमनन्यसामान्यं पाटवं विक्रमाख्यस्य कविमहत्तमस्य। विषये चास्य नेमिदूतश्लोकात् कञ्चिदुद्धृत्य स्फुटतां विधास्यामः। तद्यथा—

प्राणित्राणप्रवणहृदयो बन्धुवर्गं समग्रं
हित्वा भोगान् सह परिजनैरुग्रसेनात्मजां च।
श्रीमान् नेमिर्विषयविमुखो मोक्षकामश्चकार
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु।।

अन्येषु च द्वित्रेषु जैनकाव्येषु एषैव रीतिरनुसृतोपलभ्यते।

**दूतकाव्यवैशिष्ट्यम्**

सम्यगालोचितेषु समुपलभ्यमानेषु दूतकाव्येषु प्रतिभायाद् यथा— एतेष्वधिकान्येव रामकृष्णराधाप्रभृतीनि हिन्दुपुराणोपवर्णितचरित्राणि नेमिप्रभृतीनि जिनपुराणोपवर्णितचरित्राणि चालम्ब्यैवोपनिबद्धानि। ऐतिहासिकं काल्पनिकं वा पुरुषविशेषमालम्ब्य विरचितानीदृशकाव्यानि अल्पीयांसि एव पवनदूतादीनि समुपलब्धानि। विप्रलम्भशृङ्गार एव चैतेषु प्रायेण सर्वेष्वेवाङ्गीरसः, केवलं नेमिदूतादिषु केषुचिद् अर्वाचीनेषु शान्त एव रसः प्राधान्येन प्रविलसति। शृङ्गाररसस्य च आदितः प्राधान्याद् ईदृशेषु काव्येषु। नैतच्चित्रं यथा कृष्णगोपीलीलामधिकृत्यैव बहुभिरीदृशकाव्यनिर्माणप्रवृत्तिः सफलतां गमिता। वैशिष्ट्यञ्चैतद् दूतकाव्यगतमवधेयं यथा छन्दोऽन्तरं विहाय प्रायेण सर्वैरिव दूतकाव्यविरचकैर्मन्दाक्रान्ता एव समाश्रिता। इदञ्च नाम छन्दो विषयाणामीदृशानामुपवर्णने परमोपयोगीति आदौ प्रयुक्तं कालिदासेन, अर्वाचीनैः कविवरैरपि प्रायेण सर्वैरिव च्छन्दोऽन्तरमनादृत्य स्वस्वग्रन्थेषु एतस्यैव विनियोगः कृत इति प्रतिभाति। यच्च कालिदासादिभिश्चेतनानां दूतत्वमनङ्गीकृत्य अचेतना एव दूतरूपेण दयितसविधे प्रेषिताः, तदेव च वैशिष्ट्यं रमणीयकत्व-मतितरामातनोति दूतकाव्यानाम्।

न हि दूतत्वेन पुरुषान् चेतनाज्ञानवतोऽपि कल्पयतामर्वाचीनानां काव्यानि तथा रसिकानां चेतांसि समाक्रष्टुं प्रभवन्ति, यथा कालिदासादीनामचेतन-दूतप्रेषणविषयाणि काव्यानीति सर्व एवाङ्गीकुर्युः सुधियः।

दूतगन्तव्यमार्गस्योपवर्णनमपरं महद्वैशिष्ट्यं दूतकाव्यानामेतद्वर्णनस्य अर्वाचीनग्रन्थेषु सम्यगनङ्गीकृतत्वेऽपि। एतद्वर्णनञ्च भारतीयप्रदेशनगरादीनां प्राचीनसंस्थाननिर्णयोपयोगीति दूतकाव्यालोचनविषये प्रत्नतत्त्वान्वेषणदत्तमनसां विदुषां चेतः स्वत एवाभिमुखीभवति। तथा च दूतकाव्यरसादीनामास्वादनव्यग्राः प्रत्नतत्त्वानुशीलनपरा रसिका भौगोलिकवृत्तसङ्कलनाय द्विगुणोत्साहा दूतकाव्यालोचने प्रवर्तेरन्निति।



लघु-ग्रन्थमाला

[ ६५ ]

श्रीरघुदेवभट्टाचार्यविरचितः

# ईश्वरवादः

सम्पादकः

**डॉ. हरेरामत्रिपाठी**

उपाचार्यः, सर्वदर्शनविभागे

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य

नवदेहली




**सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः**

**वि.सं. २०६०**

# भूमिका

दुःखपङ्कनिमग्नानुद्दिधीर्षुः अष्टादशविद्यास्थानेषु अभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको गौतममुनिः प्रणिनाय। तत्र षोडशपदार्थानां तत्त्वज्ञानाद् दुःखात्यन्तिकनिवृत्तिरूपमोक्षस्य प्राप्तिर्भवति। तत्र द्वितीयपदार्थः प्रमेयम्। आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु द्वादशप्रमेयम्। तत्र प्रथमः प्रमेय आत्माऽस्ति। स च जीवात्मपरमात्मभेदेन द्विविधः। परमात्मा कार्यमात्रस्य निमित्तकारणमिति नैयायिकाः स्वीकुर्वन्ति। न चेश्वरे प्रमाणाभावात् तत्र जगत्कारणत्वकल्पनं खपुष्पवदलीकम्, न हि तत्र बाह्यप्रत्यक्षं प्रमाणम्, अरूपिद्रव्यत्वात्। बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे चोद्भूतरूपस्य कारणत्वात्, ईश्वरे च रूपाभावात्। नापि मानसं प्रत्यक्षं स्वात्मभिन्नद्रव्यत्वात्, ज्ञानादिभिन्नत्वाच्च। परात्मनः परेण मनसाऽग्राह्यत्वात्, स्वमनसा स्वप्रत्यक्षं प्रति परात्मव्यावृत्त-विजातीयमनःसंयोगस्यैव कारणत्वात्। नाऽप्यनुमानं प्रमाणम्, ईश्वरस्याप्रत्यक्षतया तस्य केनचिल्लिङ्गेन सहचारदर्शनाभावेन व्याप्तिग्रहो न भवितुमर्हति। न वोपमानं प्रमाणम्, ईश्वरतुल्यस्य कस्यचिदभावेन सादृश्यज्ञानाऽसम्भवात्। नापि शब्दः प्रमाणम्। 'द्यावाभूमी जनयन् देव एकः' इत्यादिश्रुतीनामीश्वरोच्चरितत्वेन प्रामाण्याद् ईश्वरस्यैव संशयितत्वेन ईश्वरोक्ततया श्रुतीनां प्रामाण्ये संशयात्। तथा च प्रत्यक्षानुमानोपमानशब्दप्रमाणानामगोचरत्वाद् ईश्वरस्य वस्तुन एवासत्त्वात् कथं स कार्यमात्रस्य निमित्तकारणमिति वाच्यम्, अनुमानस्य तत्र मानत्वात्, तथा हि न्यायवैशेषिकमतावलम्बिन ईश्वरसिद्ध्यर्थमनुमानप्रमाणप्रदर्शनं कृतवन्तः। वाचस्पतिमिश्रेणोच्यते[1] वेदस्यानुमानस्य चेश्वरसाधकत्वेऽपि एतत्प्रमाणद्वयमीश्वरस्य जगत्कर्तृत्वं सर्वज्ञत्वञ्च परित्यज्य तत्स्वरूपं साधयितुं न कदापि शक्नोति। तेषां मते ईश्वरः अशरीरी[2] विद्यते।

---

१. न्यायवार्तिकतात्पर्यटीका, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, १९९०। पृ. सं. ६०३। यच्चेश्वरो नाधिष्ठाता परमाण्वादीनामशरीरित्वाद् मुक्तात्मवद् ऐश्वरं ज्ञानं न सर्वविषयमनित्यञ्च ज्ञानत्वाद् अस्मदादिज्ञानवत् .........।

२. 'एतस्य वाऽक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः' 'द्यावापृथिवी जनयन् देव एकः' 'तदैक्षत बहु स्यां प्रजायेये'त्यादिः। स्मृतिश्च भवति। '........स वेत्ति विश्वं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणम्' इत्यादिका। एतयैवाशरीरित्वं दर्शितं भवति।

न्यायसूत्रकारेण महर्षिगौतमेन 'तत्कारितत्वाद् हेतु:'[१] एतेन सूत्रेण ईश्वरास्तित्वं स्वीकृतम्। सांख्या: शब्दस्य प्रामाण्यं स्वीकुर्वन्ति, तथापि तेन विचारस्थले अप्रत्यक्षवस्तुनोऽसन्दिग्धं ज्ञानं न जायते। अप्रत्यक्षवस्तुन: संशये सति यद्यनुमानप्रमाणेन तन्निश्चय: क्रियते, तर्हि अनुमानस्थले व्याप्तिपक्ष-धर्मताविशिष्टहेतुरावश्यक:। ईश्वरानुमाने व्याप्तिपक्षधर्मताविशिष्टहेतुरेव नास्तीति सांख्यानुयायिन: कथयन्ति । अत एवोदयनाचार्येण न्यायकुसुमाञ्जल्यामुच्यते—

कार्यायोजनधृत्यादे: पदात् प्रत्ययत: श्रुते:।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्यय:।।

कार्यायोजनादिशब्दोऽत्र भावप्रधानोऽभिमत:। कार्यं शब्दस्य कार्यत्वमर्थ:, आयोजनशब्दस्य आयोजनत्वं कर्मत्वं वार्थ:। धृत्यादिशब्दस्य सम्बन्धेऽपि इयमेव कथा। कार्यत्वादिसद्धेतुनैव ईश्वरविषयकमननमनुमितिर्भवति। कार्यत्वहेतुना ईश्वरानुमानाकारा:।

क्षित्यङ्कुरं सकर्तृकं, कार्यत्वाद् यथा घट:। अत्र क्षित्यङ्कुरं पक्ष:, सकर्तृकत्वं साध्यम्, कार्यत्वं हेतु:, दृष्टान्त: घट:। यद्यत् कार्यं तत्तत्कर्तृकमिति कार्यत्वं हेतु: सकर्तृकत्वस्य नियतसहचारी। नियतसाहचर्यमेव व्याप्तिरिति कार्यत्वं सकर्तृकत्वस्य व्याप्तिविशिष्टं व्याप्यं वा। क्षित्यङ्कुरादिकमित्यत्र क्षिति: स्थूला पृथिवी, अङ्कुरो द्व्यणुकमादिना तद्घटो मेघो वा ग्राह्य:। अत्र क्षितित्वमङ्कुरत्वं तद्घटत्वमेघत्वादिति चेति न पक्षतावच्छेदकं किन्तु त्रितयसाधारणस्वरूपसम्बन्धात्मकं कार्यत्वं पक्षतावच्छेदकम्, तदवच्छिन्न: पक्ष: क्षित्यङ्कुरादिकम्। प्रागभावप्रतियोगित्वात्मकं कार्यत्वं हेतु:। साध्यं सकर्तृकं कर्तृजन्यत्वम्, कर्तृत्वञ्चोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वरूपम्।

न च पक्षतावच्छेदकं यदि क्षितित्वं तर्हि क्षितित्वेन अङ्कुरादेर्ग्रहणसम्भवे अङ्कुरादे: पृथगुपादानमनर्थकमिति वाच्यम्। किञ्च क्षितितत्सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे दृष्टान्ते घटादौ अंशत: सिद्धसाधनम्। यदि पक्षतावच्छेदकं

१. न्यायसूत्रम्, सभाष्यम्—तत्कारितत्वादहेतु: (सू.२१, अ.४, आ.१)। चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, संवत् २०२६, पृ. ४७९। भाष्य—पुरुषकारमीश्वरोऽनुगृह्णाति, फलाय पुरुषस्य यतमानस्येश्वरफलं सम्पादयतीति। यदा न सम्पादयति तदा पुरुषकर्माफलं भवतीति। तस्मादीश्वरकारितत्वादहेतु: पुरुषकर्माभावे फलानिष्पत्तेरिति। गुणविशिष्टमात्मान्तरमीश्वर:। तस्यात्मकल्पात् कल्पान्तरानुपपत्ति:। अधर्ममिथ्याज्ञान-प्रमादहान्या धर्मज्ञानसमाधिसम्पदा च विशिष्टमात्मान्तरमीश्वर: तस्य, च धर्मसमाधिफलमणि-माद्यष्टविधमैश्वर्यम्।

सकर्तृकत्वप्रकारकसन्देहे विशेष्यतावच्छेदकवत्त्वमेव तदा घटस्यापि कदाचित् सकर्तृकत्वप्रकारकसन्देहविशेष्यतावच्छेदकीभूतघटत्वे सिद्धसाधनस्य दुर्वारत्वाद् इत्यस्मिन् ग्रन्थे पूर्वपक्षः।

पक्षतावच्छेदकक्षितित्वावच्छेदेन सकर्तृकत्वसिद्धेरुद्देश्यत्वे तु परमाणौ बाधापत्तेः। जन्यक्षितित्वपक्षतावच्छेदकत्वे प्रत्यक्षप्रमाणमात्रवादिनः चार्वाकमते जन्येतरक्षित्यभावाज्जन्यत्वमात्रस्य पक्षतावच्छेदकत्वौचित्येन पक्षतावच्छेदकादौ क्षितित्वस्य व्यर्थत्वाच्च। अपि च यदि जन्यत्वं पक्षतावच्छेदकं तर्हि पक्षतावच्छेदकजन्यत्वस्य साध्यस्यापि जन्यत्वरूपत्वाद् उद्देश्यतावच्छेदकविधेययो-रैक्येनोपनयवाक्याच्छाब्दबोधानुपपत्तेरेव दोषत्वात्। अपि च पक्षतावच्छेदक-हेत्वोरैक्यप्रसङ्गाच्चेति वाच्यम्। पक्षतावच्छेदकरूपकार्यत्व(जन्यत्व)-स्वरूपसम्बन्धविशेषः। हेतुस्वरूपकार्यत्वं (जन्यत्वं) प्रागभावप्रतियोगित्वरूपम्, तथा च पक्षतावच्छेदककार्यत्वस्य हेतोरैक्याभावात्।

तथा च जन्यं सकर्तृकं प्रागभावप्रतियोगित्वादित्यनुमानाकारः। ननु एवमनुमानाकारेऽपि स्वोपादानगोचरापरोक्षज्ञानचिकीर्षासमानाधिकरणकृति-जन्यत्वरूपस्य सकर्तृकरूपसाध्यस्य ध्वंसेऽभावेन बाधो व्यभिचारश्च, तत्र स्वोपादानगोचरत्वाविवक्षाया जनकमस्मदादिकृतिजन्यत्वमादाय सिद्धसाधनापत्तेः, इति चेत्, न, सत्त्वविशिष्टजन्यत्वस्य पक्षतावच्छेदकत्वे हेतुतावच्छेदकत्वे च दोषाभावात्।

यत्तु-मते कर्तृकत्वं स्वजननस्वरूपयोग्यादृष्टजनकं यद्यत् तद्भेदकूटविशिष्ट-तथाविधकृतिजन्यत्वं, तथा चोक्तसिद्धसाधनस्य वारणं सम्भवति। अत एव कार्यसामान्यं प्रति ईश्वरकृतिः कारणमिति लोके प्रवादः सङ्गच्छते। न च क्षित्यङ्कुरादिकमकर्तृकं शरीराजन्यत्वात्, आकाशवद् इत्यनुमानेन सत्प्रतिपक्ष इति वाच्यम्। शरीराजन्यत्वं पक्षे क्षित्यङ्कुरादिके भवतु अकर्तृकत्वं मास्तु इति व्यभिचारशङ्कायां तन्निवर्तकतर्काभावाद् उक्तानुमानस्य दुष्टत्वात्, अस्माकन्तु कार्यत्वं यदि सकर्तृकत्वव्यभिचारि स्यात्, तदा कृतिजन्यतावच्छेदकं न स्यादित्यनुकूलतर्कसत्त्वाद् व्यभिचारशङ्कानिरासात्।

उपदर्शितकार्यकारणभावरूपानुकूलतर्केण व्याप्तिसिद्धौ कार्यतावच्छेदेन कृतिजन्यत्वसिद्धौ, अल्पज्ञा जीवाः प्रत्यक्षं कर्तुं न शक्नुवन्ति यत् क्षित्यङ्कुरं किं, केनोपादानेनोत्पन्नञ्च। अल्पज्ञो जीवः क्षित्यङ्कुरविषयकचिकीर्षामर्थात् क्षित्यङ्कुरविषयककार्यकरणे इच्छां यत्नं कृत्वाऽपि क्षित्यङ्कुरादिकमुत्पादयितुं न

शक्नोतीति प्रत्यक्षसिद्धम्। क्षित्यङ्कुरस्वरूपकार्यस्य निमित्तं बहवः कर्तारः सन्तीति स्वीकारोऽनावश्यकः, गौरवात्। अत एव एक एव कर्त्ता लाघवात्। तथा च क्षित्यङ्कुरस्यैकः कर्त्ता अस्ति। स चेश्वरः।

आयोजनम्, आयुज्यते अनेनेति व्युत्पत्त्या आयोजनशब्दस्यार्थः कर्म, क्रिया वा। क्रिययैव वस्तुसकलं युज्यते। अनुमानाकारः सृष्टेः सर्वप्रथमं द्व्यणुकस्यारम्भको यः संयोगः, येन संयोगेन अवयवी उत्पन्नो भवति, स एव आरम्भकः संयोगः। द्व्यणुकारम्भकसंयोगानुकूलक्रिया चेतनप्रयत्नपूर्विका क्रियात्वात्। घटारम्भककपालसंयोगक्रियावत्। एतादृशी क्रिया चाल्पज्ञजीवस्य प्रयत्नेन साध्या नास्ति। अत एवाल्पज्ञजीवातिरिक्त एकः स्वतन्त्रः कर्त्ता अनुमितो भवति। स चेश्वरः।

धृतिः पदार्थो धारणं, सकलस्य पतनाभावो धृतिरिति केचित्। अत्रानुमानाकारः—अखिलं ब्रह्माण्डसकलं, प्रयत्नवदधिष्ठितम्, प्रयत्नवत्कर्तृकधृतिमत्त्वात्, पतनाभावाद् वा। यथा उड्डीयमानविहङ्गमधृतकाष्ठदण्डः। गुरुत्वादेव द्रव्यस्य पतनं जायते। ब्रह्माण्डस्य गुरुत्वेऽपि न पतनं भवति, अपि तु तद् यथास्थानमेव तिष्ठति। तथा च ब्रह्माण्डसकलं प्रयत्नवत्कर्तृकाश्रितमिति सिद्धम्। ब्रह्माण्डसकलस्य धारणरूपप्रयत्नवन्तो जीवा न सन्ति। ब्रह्माण्डसकलस्य गुरुत्वेऽपि पतनाभावरूपधारणरूपप्रयत्नाश्रय एकः स्वतन्त्रचेतनः। स च ईश्वरः।

पद्यतेऽनेनेति व्युत्पत्त्या पदशब्दार्थो व्यवहारः। सृष्ट्यारम्भे ईश्वरो जीवेषु अनुग्रहं कृत्वा जीवान् प्रति वस्तुपरिचयं कारयति। अत्रानुमानाकारः—घटादिसम्प्रदायस्य प्राथमिकव्यवहारः स्वतन्त्रपुरुषाधीनः, व्यवहारत्वात्। आधुनिकपाणिनीयनदीवृद्ध्यादिसंज्ञाव्यवहारवत्। घटादिप्रथमव्यवहारस्य कारका अल्पज्ञजीवा न सन्ति। यो घटादिप्रथमव्यवहारं कारयति स चेश्वरपदवाच्यः। प्रत्यय इत्यस्यार्थः प्रामाण्यं प्रमात्वं वा। अनुमानाकारः—वेदवाक्यजन्यं ज्ञानम्, कारणगुणजन्यं, प्रमात्वात्, यथा प्रत्यक्षप्रमाज्ञानम्। गुणेन ज्ञाने जाते तज्ज्ञानं प्रमा यथार्थं वा भवति। अथवा वेदजन्या प्रमा वक्तृयथार्थवाक्यार्थज्ञानजन्या शाब्दप्रमात्वात् चैत्रवाक्यजन्यप्रमावत्। अनया दिशा सकलवेदार्थस्य यथार्थज्ञानवानेकोऽनुमितो भवति। स एवेश्वरः। अथवा प्रत्ययशब्दार्थो विधिप्रत्ययः। तथा चानुमानाकारः—वैदिकविधिप्रत्यय आप्ताभिप्रायबोधकः, विधिप्रत्ययत्वात्। श्रुतिरित्यस्यार्थो वेदः (अत्र वेदत्वमर्थः)। अत्रानुमानाकारः—

वेदवाक्यं सकलं, पौरुषेयं, वेदत्वात्, आयुर्वेदवत्। वेदे पौरुषेयत्वव्याप्यवेदत्वस्य निश्चये जाते अनुमितिर्भवति, वेद: पौरुषेय: सृष्ट्यारम्भे ईश्वर एव मन्वादिरूपेण अवततार। अत एव वेदस्य आदिवक्ता ईश्वर एव।

वाक्यम् इत्यस्यार्थ: वाक्यत्वम्। अत्रानुमानाकार:—वेद: पौरुषेय:, वाक्यत्वात्, महाभारतवत्। अत्र परामर्शे जाते वेदवाक्यं पौरुषेयमिति अनुमिति: प्रमा जायते। य: पुरुषोऽस्य कर्त्ता स एवेश्वर:।

संख्याविशेष इत्यस्यार्थो द्वित्वादिसंख्यात्वम्। तथा चानुमानाकार:—सृष्टिप्रथमद्व्यणुकपरिमाणजनकपरमाणुगतद्वित्वसंख्या अपेक्षाबुद्धिजन्या, द्वित्वसंख्यात्वात्। यथा घटस्य पटस्य च द्वित्वसंख्या। परिमाणमात्रं स्वसजातीयोत्कृष्टपरिमाणजनकं भवति। उक्तानुमानेनेदं सिद्धं भवति यत् परमाणुपरिमाणं न द्व्यणुकपरिमाणस्य कारणं परमाणोर्द्वित्वसंख्यैव द्व्यणुकपरिमाणस्य कारणम्। सृष्टे: प्रथमद्व्यणुकपरिमाणे परमाणोर्द्वित्वसंख्यैव कारणम्। सृष्टिप्रथमे शरीराद्यभाववशाज्जीवो ज्ञानशून्य:, तत्समये यस्य चेतनस्य अपेक्षाबुद्ध्या परमाणोर्द्वित्वसंख्या जायते, स चेश्वरपदवाच्य:। इत्येवं रीत्या उदयनाचार्येण साक्षात्परम्परया ईश्वरसाधकानि अनुमानानि उक्तानि। एवमीश्वरस्य सिद्ध्यनन्तरमीश्वरोच्चरितत्वाद् वेदस्य प्रामाण्यसिद्धौ सत्यां 'य: सर्वज्ञ: सर्वविद्' 'यस्य ज्ञानमयं तप:' 'सोऽकामयत बहु स्यां प्रजायेय' 'द्यावाभूमी जनयन् देव एक:' 'ईश्वरमुपासीत' इत्यादिश्रुतिवाक्यान्यपि ईश्वरसिद्धौ प्रमाणानि।

केचित्तु सामान्यत: कार्यत्वेन कृतित्वेन कार्यकारणभावाभावेऽपि विशेषतो घटत्वावच्छिन्नं प्रति कुलालकृतित्वेन कारणताया: क्लृप्ततया सर्गाद्यकालीनघटव्यक्तिं खण्डघटव्यक्तिं वा पक्षीकृत्य घटत्वहेतुना सकर्तृकत्वसाधने सर्गाद्यसमये कुलालाद्यभावाद् एतत्कुलालस्य च खण्डघटानुकूलप्रयत्नाभावात् तदाश्रयत्वेनेश्वरस्य सिद्धिरिति वदन्ति।

दीधितिकारास्तु सामान्यत: कार्यत्वावच्छिन्नं प्रति कृते: कारणत्वविरहेऽपि घटत्वावच्छिन्नं प्रति कृते: कारणतया खण्डघटोत्पत्ते: प्राक्कृतेरावश्यकत्वेन तादृशकृत्याश्रयतया ईश्वरस्य सिद्धिरिति वदन्ति।

आपामरसाधारणजना ईश्वरास्तित्वं स्वीकुर्वन्ति; परन्तु चार्वाकादि-मतानुयायिनो जगत्कर्तृत्वेनेश्वरस्यास्तित्वं न स्वीकुर्वन्ति। तेषां मतनिराकरणाय नव्यनैयायिकमतप्रदर्शनाय रघुदेवेन ईश्वरवादो रचित:। ग्रन्थेऽस्मिन् ईश्वरसाधकानि

प्रमाणानि उद्धृतानि। तत्र दीधितिकारमतम्, उदयनाचार्यमतमन्येषां नैयायिकानां च मतं पर्यालोचितमिति दृश्यते। अस्य ईश्वरवादग्रन्थस्य प्रणेता रघुदेवो रघुदेवतर्कालङ्कारभट्टाचार्य एव। अस्य ग्रन्थस्यादौ रघुदेवेनोक्तम्—

यस्याभेदस्फुटपरिचयोत्पादनायार्द्धदेहं
गौरी प्राप्ता हरिरपि यदीयार्द्धदेहं जहार।
प्रत्युद्वामा परिमितगुणग्राममीशं तमाद्यं
वन्दे यस्मादमलमतिभिः प्रार्थ्यते मोक्षलक्ष्मीः।।

रघुदेवभट्टाचार्यकृतद्रव्यसारसङ्ग्रहस्यादौ मङ्गलाचरणरूपेणायं श्लोक एवोपलभ्यते। अत एव रघुदेवभट्टाचार्यस्येयं कृतिः। द्रव्यसारसङ्ग्रहस्यान्ते इत्थमुक्तं रघुदेवभट्टाचार्येण।

'इति श्रीयुतमहामहोपाध्यायहरिरामतर्कवागीशभट्टाचार्यशिष्यश्रीयुतरघुदेवभट्टाचार्यविरचितो द्रव्यसारसङ्ग्रहः समाप्तः'। इत्यनेन प्रतिभाति रघुदेवः महामहोपाध्यायहरिरामतर्कवागीशभट्टाचार्यस्य शिष्य आसीत्। रघुदेवभट्टाचार्यकृतस्य द्रव्यसारसङ्ग्रहस्यान्ते 'संवत् १८१८ मिति कुवारवदी ९।। कै पोथीशु पुरानै भ इति' लिखितमस्ति।

अनेन ज्ञायते १८१८ संवत्सरात् पूर्वमेव रघुदेवभट्टाचार्यस्य स्थितिकाल आसीत्। रघुदेवनाम्ना निम्नलिखिता ग्रन्था: समुपलभ्यन्ते—

१. अनुमितिपरामर्शविचारः।[1] २. अवयवग्रन्थः। ३. आकाङ्क्षावादः।[2] ४. आख्यातवादटिप्पणी[3] / आख्यातवादविवरणम्[4] / आख्यातवादव्याख्या[5] / आख्यातशक्तिवादः। ५. इच्छावादः। ६. ईश्वरवादः। ७. उपसर्गद्योतकताविचारः। ८. कारकवादः।[6] ९. कारणतावादार्थः।[7] १०. कार्यकारणभावविचारः।

---

१. सरस्वतीभवनपुस्तकालये, (वाराणसी) सूचीपत्र-संख्या ३०५१५, ३१७४२, ९५००२, ९५४३२। रघुनाथपुस्तकालये, जम्मू ,, ,, १३२२।
२. सरस्वतीभवनपुस्तकालये, (वाराणसी) ,, ,, ९४४५६।
३. तदेव ,, ,, ३१३०४।
४. तदेव ,, ,, ९४११०।
५. तदेव ,, ,, ९५१३९।
६. तदेव ,, ,, ३१३७७।
७. तदेव ,, ,, ३१३७७।

११. कणादसूत्रव्याख्यानम्। १२. चित्ररूपवादः। १३. ज्ञानद्वयवादः। १४. ज्ञानलक्षणाविचारः। १५. तत्त्वचिन्तामणिव्याख्या[1] गूढार्थदीपिका। १६. तत्त्वचिन्तामण्यालोकटीका। १७. तत्त्वचिन्तामणिदीधितिटीका। १८. तर्कविचारः। १९. दण्डकारणताविचारः। २०. द्रव्यसारसङ्ग्रहः[2]। २१. दशलकारवादः[3]। २२. धर्मितावच्छेदकप्रत्यासत्तिनिरूपणम्। २३. धर्मितावादः। २४. नञर्थवादः/नञर्थटिप्पणी[4]/नञर्थवादटिप्पणी[5]/नञवादव्याख्या[6]/नञवादरहस्यम्[7]/नञवादार्थविवेचनम्[8]। २५. नवीननिर्माणम्[9]/नव्यमतविचारः[10]। २६. न्यायकुसुमाञ्जलिव्याख्या[11]। २७. निरुक्तिप्रकाशः। २८. निश्चयवादः। २९. निश्चयत्वनिरुक्तिः[12]। ३०. पक्षता[13]। ३१. प्रतियोगिज्ञानकारणताविचारः। ३२. प्रतियोगिज्ञानस्य हेतुत्वखण्डनम्। ३३. पदार्थखण्डनविवरणम्[14] / पदार्थखण्डनटिप्पणम् / पदार्थतत्त्वनिरूपणव्याख्या। ३४. मनोवादः। ३५. लक्षणावादः[15]। ३६. लौकिकविषयतावादः। ३७. वादार्थसारसङ्ग्रहः[16]। ३८. विशिष्ट-

---

१. सरस्वतीभवनपुस्तकालये, सूचीपत्र-संख्या ३२९३४,३०४८०, १७८४८,३४१५८।
२. (क) सरस्वतीभवनपुस्तकालये, सूचीपत्र-संख्या ३०६७९।
   (ख) रघुनाथपुस्तकालये, (जम्मू) " " ३३००।
३. सरस्वतीभवनपुस्तकालये, (वाराणसी) " " ३१३७९।
४. तदेव " " ३०९५९,३०६११।
५. तदेव " " ३३५१८।
६. तदेव " " १७७४०।
७. तदेव " " ३३५११।
८. तदेव " " १४०१०,१४८११।
९. तदेव " " १७२६७ दीधितिनिरुक्तिः।
१०. तदेव " " १५४०१।
११. तदेव " " ३२६८३,३१११८।
१२. तदेव " " १५३००,३०८६८।
१३. तदेव " " ३१७६१।
१४. तदेव " " ३०५०६।
१५. तदेव " " १५३०१।
१६. तदेव " " ३०४२४।

वैशिष्ट्यबोधविचारः[१]। ३९. विशिष्टवैशिष्ट्यवादः[२]। ४०. विशिष्टवैशिष्ट्यावगाहिवादार्थः[३]। ४१. विशेषणतावच्छेदकत्वनिर्णयहेतुवादो[४] वा/विशिष्टवैशिष्ट्यबोधः। ४२. विषयतावादार्थः[५]/विषयतावादः[६]। ४३. स्मृतिसंस्कारवादः। ४४. सामग्रीवादः[७]/सामग्रीवादार्थः[८]/सामग्रीक्विवेचनम्/सामग्रीविचारः[९]। ४५. मुक्तिवादः[१०]। ४६. गूढार्थतत्त्वप्रतिपत्तिः।

ईश्वरवादग्रन्थस्य हस्तलेखा विविधेषु पुस्तकालयेषु समुपलब्धाः सन्ति। अस्माकं सम्पादनकर्मणि आधारीभूतास्त्रयो हस्तलेखाः सन्ति। तत्र प्रथमतृतीयौ हस्तलेखौ सरस्वतीभवनपुस्तकालये वाराणस्यां विद्येते। द्वितीयहस्तलेखो रघुनाथपुस्तकालये (जम्मूस्थस्य) (स्टेनसूचीपत्रसंख्या १३२२) विद्यते। अस्य ग्रन्थस्य सम्पादने मूलाधारीभूते सरस्वतीभवनपुस्तकालयस्थपाण्डुलिपी एव विद्येते। पाठभेदोपादानाय प्रथमद्वितीयौ हस्तलेखावेव प्रामुख्येनात्र सम्प्रयुक्तौ विद्येते। द्वितीयहस्तलेखे मङ्गलाचरणं न विद्यते, मध्ये मध्ये अनेकास्त्रुटयस्तत्र सन्ति। परन्तु प्रथमहस्तलेखे द्रव्यसारसङ्ग्रहस्यादौ रघुदेवेन यन्मङ्गलाचरणं विहितं तदेवात्र मङ्गलाचरणं विद्यते। मङ्गलाचरणानन्तरं रघुदेवेन स्वनामोल्लेखः कृतः। यथा—

'यद्यपीह स्वल्पात् किञ्चिदुच्यते' एवं ग्रन्थान्ते 'इति रघुदेवकृत ईश्वरवादः समाप्तः' इत्यनेन प्रतिभाति यदस्य ग्रन्थस्य प्रणेता रघुदेवभट्टाचार्य एव विद्यते। महामहोपाध्यायेन श्रीदिनकरभट्टाचार्येण न्यायसिद्धान्तमुक्तावलीग्रन्थस्य दिनकरी टीका कृता। तत्रेश्वरसिद्धिः प्रतिपादिता, तेन सह कुत्रचित् साम्यं विद्यते।

---

१. सरस्वतीभवनपुस्तकालये (वाराणसी) सूचीपत्र-संख्या ९४५३५।
२. तदेव ,, ,, ३१९७२,७३।
३. तदेव ,, ,, ३०७८९।
४. तदेव ,, ,, ९४०७९।
५. तदेव ,, ,, ९४८३७।
६. तदेव ,, ,, ९७४६०।
७. तदेव ,, ,, ३१७२७,२८।
८. तदेव ,, ,, ३०३८९।
९. तदेव ,, ,, ९४०८०।
१०. तदेव ,, ,, ३०२९८।

## अस्येश्वरवादस्य न्यायसिद्धान्तमुक्तावलीदिनकरीव्याख्यायाश्च कुत्रचिद् व्याख्यानसाम्यम्।

| न्यायसिद्धान्तमुक्तावल्या दिनकरी | रघुदेवकृत ईश्वरवादः |
| --- | --- |
| १. ननु कार्यं विशेष्यतासम्बन्धावच्छिन्नकृतिनिष्ठजनकतानिरूपितसमवायसम्बन्धावच्छिन्नजन्यताशालिप्रागभावप्रतियोगित्वादित्यनुमानं फलितं, तत्र च ध्वंसे पक्षतावच्छेदकजन्यत्वाक्रान्ते विशेष्यतासम्बन्धावच्छिन्नकृतिनिष्ठजनकतानिरूपितसमवायसम्बन्धावच्छिन्नजन्यत्वरूपसाध्यस्याभावाद् बाध इति चेन्न। सत्त्वविशिष्टजन्यत्वस्यैव ध्वंसव्यावृत्तस्य पक्षतावच्छेदकत्वोपगमात्। न च हेत्वधिकरणे ध्वंसे उक्तसाध्याभावेन व्यभिचार इति वाच्यम्। सत्त्ववैशिष्ट्यस्य हेतौ विशेषणात्। अथैवं रीत्या व्यभिचारवारणेऽपि ध्वंसस्य कृतिजन्यत्वे मानाभावेन कार्यमात्रकृतिजन्यत्वप्रवादो व्याहन्येतेति चेन्न। तादृशप्रवादस्य निर्युक्तिकत्वेनाश्रद्धेयत्वात्।<br><br>यद्वा जन्यत्वमात्रं ध्वंससाधारणमेव पक्षतावच्छेदकं, कृतिजन्यत्वमात्रसाध्यमेवञ्च हेतावपि सत्त्ववैशिष्ट्यं नोपादेयं प्रयोजनाभावात्। एवञ्च ध्वंसेऽपि ईश्वरीयकृतिजन्यत्वस्य निराबाधतया कार्यमात्रे कृतिजन्यत्वप्रवादोऽप्युपपद्यत इति। न च कृतिजन्यत्वमात्रस्य साध्यत्वेऽदृष्टद्वारा | १. अथैवं सति जन्यं सकर्तृकं प्रागभावप्रतियोगित्वादित्यनुमानं पर्यवसन्नं तच्च न सम्भवति ध्वंसस्यासमवेततया सकर्तृकत्वस्य स्वोपादानगोचरापरोक्षज्ञानचिकीर्षासमानाधिकरणकृतिजन्यत्वरूपस्य ध्वंसेऽभावेन बाधादिति। न च तत्र स्वोपादानगोचरत्वविवक्षायां प्रयोजनाभावाद् इति वाच्यम्। तथा सत्यदृष्टजनकास्मदादितथाविधकृतिमादाय सिद्धसाधनापत्तेः। न दृष्टान्तपक्षसाधारणस्वत्वस्यैकस्याभावात्, तथा निवेशो न सम्भवतीति वाच्यम्। समवायसम्बन्धेन कार्यत्वावच्छिन्नं प्रति विषयताप्रत्यासत्त्यैव कृत्यादेः हेतुतया विषयताप्रत्यासत्यवच्छिन्नतथाविधकृतिकारणतानिरूपितसमवायसम्बन्धावच्छिन्नकार्यत्वस्य तदर्थत्वसम्भवेनानुपपत्त्यभावादिति चेन्न। सत्त्वविशिष्टजन्यत्वस्य प्रतियोगिविशिष्टजन्यत्वस्य वा पक्षतावच्छेदकत्वे दोषाभावात्। यत्तु कर्तृकत्वमिह नोपदर्शितस्वोपादानगोचरत्वगर्भमपि तु स्वजननस्वरूपयोग्यादृष्टजनकं यद्यत्तद्भेदकूटविशिष्टतथाविधकृतिजन्यत्वं तथाप्युपदर्शितासिद्धसाधनवारणसम्भवात्। एवञ्च ध्वंसे तथाविधसाध्याभावा- |

| न्यायसिद्धान्तमुक्तावली दिनकरी | रघुदेवकृत ईश्वरवादः |
|---|---|
| हविरादिगोचरास्मदीयकृतिजन्यत्वमादाय सिद्धसाधनमिति वाच्यम्। अदृष्ट-द्वारकत्वेन कृतिजन्यताया विशेष-णीयत्वादिति दिक्। | निर्णयेन बाधासम्भवाज्जन्यत्वस्य शुद्धस्य पक्षतावच्छेदकत्वेऽपि न क्षतिः। अत एव कार्यसामान्यं प्रति ईश्वरकृतिः कारणमिति प्रवादोऽपि सङ्गच्छते। तथाविधभेदकूटस्य दुर्ज्ञेयतया तद्घटितधर्मेण साध्यत्वा-सम्भवेनोपदर्शितरीतेरावश्यकत्वात् निर्युक्तिकत्वं प्रवादस्य अश्रद्धेयतया उपदर्शितप्रवादव्याघातेऽपि क्षत्य-भावादिति। |
| २. केचित्तु मास्तु कार्यत्वं कृतेः कार्यतावच्छेदकं तथापि घटत्वाद्य-वच्छिन्नं प्रति कृतेः कारणतया, सर्गाद्यकालीनघटादिकं पक्षीकृत्य घटत्वादिहेतुना सकर्तृकत्वसाधने जीवानां बाधादीश्वरसिद्धिरित्याहुः। | २. अस्तु वा घटपटत्वाद्यवच्छिन्नं प्रति कृतित्वेन विशिष्यहेतुता, तथापि सर्गाद्यकालीनं घटादिकं पक्षीकृत्य घटत्वादिहेतुना सकर्तृकत्व-साधनेनेश्वरसिद्धिरप्रत्यूहैवेति। |
| ३. कार्यत्वावच्छिन्नं प्रति कृतित्वेनैक-हेतुत्वकल्पनस्यैवोचितत्वात्। | ३. अन्वयव्यतिरेकाभ्यां कार्यत्वावच्छिन्नं प्रति कृतित्वेनैव हेतुत्वस्य क्लृप्तत्वात्। |
| ४. तदुक्तमाचार्यैः—एकामसिद्धिं परि-हरतो द्वितीयापत्तिरिति। | ४. अत एवोक्तमाचार्यैरात्मतत्त्वविवेके ईश्वरवादे—'एकामसिद्धिं परिहरतो द्वितीयापत्तेरिति वाच्यम्'। |

रघुदेवकृत-ईश्वरवादस्य संशोधनं रघुनाथपुस्तकालयस्य हस्तलिखित-पाण्डुलिपितः कृतमस्ति। विदुषां परामर्श एवात्र भविष्यति प्रमाणम्।

**कार्तज्ञ्यज्ञापनम्**

कस्यापि ग्रन्थस्य सम्पादने काठिन्यमनुभवन्त्येव विद्वांसः। अतस्तत्तद्विद्यासु निष्णातानां गुरूणामेवादौ कार्तज्ञ्यं शिरसा वहामि। परमश्रद्धेयानां **प्रो. विद्यानिवासमिश्र**महोदयानां पादपद्मयोर्भूयो भूयः सश्रद्धं प्रणतिं समर्पयामो

येऽस्मान् नितरां स्निह्यन्ति। सम्पादनकार्यं कुर्वता पाण्डुलिप्यक्षरदोषाच्च पदे पदे महत्काठिन्यमनुभवता मया सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य न्यायवैशेषिक-विभागाध्यक्षाणामाचार्यपदमलङ्कृतानां नव्यन्यायशास्त्रे गङ्गेशसदृशानामाचार्याणां **श्रीवशिष्ठत्रिपाठि**महोदयानां मार्गनिर्देशनेनेदं कार्यं सम्पादितम्। अत एतेषां गुरुवराणां चरणाभ्यां सनतिं कुसुमाञ्जलिं वितरामि। अथ पूज्यमातृपितृचरणाभ्यां सनतिं कुसुमाञ्जलिं वितरामि। **डॉ. ललितकुमारत्रिपाठिनो**ऽपि धन्यवादार्हाः सन्ति, येषां सत्प्रेरणया इदं कार्यं सम्पादितं मया।

अस्य ग्रन्थस्य हस्तलेखच्छायाप्रतिः सरस्वतीभवनपुस्तकालयतः प्राप्ता। एतदर्थं तद्विश्वविद्यालयस्य कुलपतयः, अधिकारिणः, पुस्तकालयाध्यक्षाः, कर्मचारिणश्च धन्यवादार्हाः। जम्बूस्थरघुनाथमन्दिरपुस्तकालयस्य धर्मार्थ-ट्रस्टाधिकारिणो विशेषतस्तत्पुस्तकालयाध्यक्षाः **डॉ. धनिरामशास्त्रिणो** धन्यवादार्हाः। अस्य ग्रन्थस्य प्रकाशने साहाय्यं विहितवान् **श्रीकृष्णमुरारीत्रिपाठी**, सोऽपि धन्यवादार्हः।

अतः परं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याङ्गभूतस्य अनुसन्धान-संस्थानस्य निदेशकानां **डॉ. राजारामशुक्ल**महोदयानां, प्रकाशनसंस्थानस्य निदेशकानां **डॉ. हरिश्चन्द्रमणित्रिपाठि**महोदयानाञ्च सत्प्रेरणया सम्पादनकार्यं सञ्जातम्। अतस्तेषां हृदयेन कार्तज्ञ्यं शिरसा वहामि। **डॉ. ददन-उपाध्यायैः** अन्यैः संस्थाने कार्यरतैः कर्मचारिभिश्च सततपरामर्शपूर्वकं मुद्रणसौविध्यं सम्पादितमतस्तान् प्रति कृतज्ञतां वितरामि। मुद्रणालयाधिकारिणो मुद्रकाश्च धन्यवादार्हाः, यैः अस्य ग्रन्थस्य मुद्रणं शीघ्रमेव कृतम्।

अस्य ग्रन्थस्य सम्पादने यथामति पाठनिर्धारणार्थं कश्चन प्रयत्नो व्यधायि। तथाप्यत्र यदि क्वचन त्रुटयः स्युः, तर्हि क्षमां याचे। यथा—

**गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।**
**हसन्ति दुर्जनास्तत्र समादधति सज्जनाः।।** इति।

अन्ते च विश्वनाथस्वरूपं हनुमन्तं प्रणम्य विरमामि।

**नवदेहली**
वैक्रमसंवत् २०६०

विदुषां वशंवदः
**हरेरामत्रिपाठी**
उपाचार्यः, सर्वदर्शनविभागस्य
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठे

# विषयानुक्रमणिका


| विषयाः | पृष्ठ-संख्या |
|---|---|
| १. भूमिका | १-११ |
| २. मङ्गलाचरणम् | १५ |
| ३. जन्यत्वमेव पक्षतावच्छेदकम् | १५ |
| ४. यत्तु-मते ईश्वरस्य ज्ञानादिसिद्धिः | १७ |
| ५. वेदानां प्रामाण्यम् | १९ |
| ६. कार्यकारणभावसिद्धिः | १९ |
| ७. आचार्यमतस्योदाहरणम् | १९ |
| ८. पुनराचार्यमतस्योदाहरणम् | १९ |
| ९. शरीरजन्यत्वस्योपाधित्वनिरासः | २० |
| १०. ईश्वरस्य भोगावच्छेदकशरीरनिरासः | २० |
| ११. शरीरत्वस्य जातित्वनिरासः | २० |
| १२. ईश्वरस्य परमाणुरूपाणि शरीराणि | २१ |
| १३. वस्तुतस्तु इति मते ईश्वरानुमानम् | २२ |
| १४. उदयनाचार्यमते परमाणुरूपस्येश्वरशरीरसिद्धिः | २२ |
| १५. नवीनमतम् | २२ |
| १६. ग्रन्थकारमते ईश्वरस्य नित्यज्ञानादिसिद्धिः | २२ |
| १७. परिशिष्टम्—क | २५ |
| १८. परिशिष्टम्—ख | २६ |




श्रीरघुदेवभट्टाचार्यकृतः

# ईश्वरवादः

।। ॐ नमः परमात्मने ।।

यस्याभेदस्फुटपरिचयोत्पादनायार्द्धदेहं
गौरी प्राप्ता हरिरपि यदीयार्द्धदेहं जहार।
प्रत्युद्दामा परिमितगुणग्राममीशं तमाद्यं
वन्दे यस्मादमलमतिभिः प्रार्थ्यते मोक्षलक्ष्मीः।।

यद्यपीह न सन्देहो न वास्ति विकल्पनान्यथा तथापि रघुदेवेन स्वल्पात् किञ्चिदुच्यते। ईश्वरे[१] न तावत् प्रत्यक्षं प्रमाणम्। आत्मप्रत्यक्षानुकूलास्मदीयविजातीयमनःसन्निकर्षस्य तत्राभावात्। अन्यथा परात्मनोऽपि प्रत्यक्षापत्तेः। नापि[२] यः सर्वज्ञः स सर्वविद् यस्य ज्ञानमयं तपस्तस्मादेतद् ब्रह्मनामरूपमन्नं च जायत इत्यादि श्रुतयस्तत्र प्रमाणम्। श्रुतीनामीश्वरोक्तत्वेनैव प्रामाण्येन तत्सन्देहे तासां सन्दिग्धप्रामाण्यकत्वात्। न च नित्यत्वेन यन्निर्दोषत्वे तेनैव तासां प्रामाण्यमिति वाच्यम्। वर्णानित्यतावादे नित्यत्वस्य तत्र दूषितत्वात्। किन्तु विवादाध्यासितकर्त्तृपक्षककार्यत्वहेतुकसकर्तृकत्वानुमानं तत्र प्रमाणम्। तत्र परार्थानुमाने विचाराङ्गविप्रतिपत्त्यावश्यकताया विप्रतिपत्तयो विवादाध्यासितकर्तृकं[५] सकर्तृकं न वेत्यादयो बोध्याः।

नन्वत्र किं पक्षतावच्छेदकं[६] विवादविषयकर्तृकत्वं तदिति दुर्वचत्वात्। न च सकर्तृकत्वप्रकारकसन्देहे विशेष्यतावच्छेदकत्वमेव[७] तदिति वाच्यम्। घटस्यापि

---

१. ख पुस्तके अथेश्वरसमुद्भावे न प्रत्यक्षं प्रमाणमिति पाठः।

२. ख नापि यः सर्वज्ञ इत्यादि श्रुतयस्तत्र प्रमाणम्।

३. वर्णानामनित्यताया व्यवस्थापितत्वात्।

४. क्षित्यादिपक्षकसकर्तृकत्वानुमानं तत्र प्रमाणम्।

५. कर्तृकत्वं।

६. न च विवादविषयकर्तृकत्वं तदिति वाच्यं तस्य दुर्वचत्वात्।

७. विशेष्यतावच्छेदकत्वमिति पाठः।

कदाचित् सकर्तृकत्वप्रकारकसन्देहविशेष्यतावच्छेदकीभूतघटत्ववत्त्वेन सिद्धसाधनस्य दुर्वारत्वात्।

न चावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वादंशतः सिद्धसाधनस्यादोषत्वमिति वाच्यम्। तथापि यत्राङ्कुरविशेषे सकर्तृकत्वस्य[१] न सन्देहः, तत्र सकर्तृकत्वासिद्धेः।[२] न च जन्यत्वमेव[३] पक्षतावच्छेदकमवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतायामंशतः सिद्धसाधनस्यादोषतया[४] न कोऽपि दोष इति वाच्यम्। प्रकृते कार्यत्वस्य हेतुतया[५] पक्षतावच्छेदकस्य हेतुत्वप्रसङ्गादिति चेन्न। जन्यत्वस्यैवात्र पक्षतावच्छेदकत्वात्। न चोक्तदोषः, तस्य स्वरूपसम्बन्धविशेषहेतुस्वरूपकार्यत्वस्य[६] तु प्रागभावप्रतियोगित्वरूपतयानुक्तानुपपत्त्यभावात्।[७] अथैवं[८] सति जन्यं सकर्तृकं प्रागभावप्रतियोगित्वादित्यनुमानं पर्यवसन्नं तच्च न सम्भवति। ध्वंसस्यासमवेततया सकर्तृकत्वस्य स्वोपादानगोचरापरोक्षज्ञानचिकीर्षासमानाधिकरणकृतिजन्यत्वरूपस्य[९][१०] ध्वंसेऽभावेन बाधादिति।

न च तत्र स्वोपादानगोचरत्वविवक्षायां प्रयोजनाभावादिति[११] वाच्यम्। तथा सत्यदृष्टजनकास्मदादितथाविधकृतिमादाय[१२][१३] सिद्धसाधनापत्तेः। न दृष्टान्तपक्षसाधारणस्वत्वस्यैकस्याभावात्[१४] तथा निवेशो न सम्भवतीति वाच्यम्। समवायसम्बन्धेन कार्यत्वावच्छिन्नं प्रति विषयताप्रत्यासत्त्यैव कृत्यादेर्हेतुतया विषयताप्रत्यासत्त्यवच्छिन्नतथाविधकृतिकारणतानिरूपितसमवायसम्बन्धावच्छिन्नकार्यत्वस्य तदर्थत्वसम्भवेनानुपपत्त्यभावादिति चेन्न। सत्त्वविशिष्टजन्यत्वस्य प्रतियोगि[१५]विशिष्टजन्यत्वस्य वा पक्षतावच्छेदकत्वे दोषाभावात्।[१६]

---

१. ख सकर्तृकस्य इति पाठः। २. ख साध्यासिद्धेः इति पाठः।
३. ख जन्यत्वमेवात्र इति पाठः।
४. ख सिद्धसाधनस्य पूर्ववददोषत्वादिति वाच्यमिति पाठः।
५. ख हेतुपक्षतावच्छेदकयोरैक्यप्रसङ्गादिति चेन्न।
६. ख रूपतया इति पाठः। ७. ख रूपतयोक्तानुपपत्तेरभावादिति पाठः।
८. ख अथैवं तदनुमानं न सम्भवतीति पाठः।
९. ख सकर्तृकत्वस्योपादान इति पाठः। १०. ख ध्वंसे इति पाठो न विद्यते।
११. ख प्रयोजनाभाव इति पाठः। १२. ख जनकास्मदीय इति पाठः।
१३. ख कृतिजन्यत्वमादाय इति पाठः। १४. ख स्वत्वस्यैक्याभावादिति पाठः।
१५. ख प्रतियोगित्वविशिष्ट इति पाठः। १६. ख पक्षतावच्छेदकत्वेनादोषादिति पाठः।

यत्तु कर्तृकत्वमिह नोप[1]दर्शितस्वोपादानगोचरत्वगर्भमपि तु स्वजनन-स्वरूपयोग्यादृष्टजनकं यद्यत्तद्भेदकूटविशिष्टतथाविधकृतिजन्यत्वं तथा[2]प्युपदर्शित-सिद्धसाधनवारणं[3] सम्भवति। एवञ्च ध्वंसे तथाविधसाध्याभावानिर्णयेन बाधासम्भवाज्जन्यत्वस्य शुद्धस्य पक्षतावच्छेदकत्वेऽपि न क्षतिः। अत[4] एव कार्यसामान्यं प्रति ईश्वरकृतिः कारणमिति प्रवादोऽपि सङ्गच्छते। [5]तथाविधभेद-कूटस्य दुर्ज्ञेयतया तद्घटितधर्मेण साध्यत्वासम्भवेन उपदर्शितरीतेरावश्यकत्वात्, निर्युक्तिकत्वप्रवादस्याश्रद्धेयतया उपदर्शितप्रवादव्याघातेऽपि क्षत्यभावादिति। यत्तु क्षितित्वमत्र पक्षतावच्छेदकमिति। तन्न। क्षितित्वस्य पृथिवीत्वापरपर्यायस्य सामानाधिकरण्येन पक्षतावच्छेदकत्वे घटादिकमादाय सिद्धसाधनात्।

अवच्छेदकावच्छेदेन तथात्वे पार्थिवपरमाणौ कार्यत्वरूपहेतोर्भागासिद्धेरिति। य[6]त्तु क्षितित्वमात्रं अङ्कुरत्वं द्व्यणुकत्वं नित्यसमवेतत्वं वात्र पक्षतावच्छेदकमिति। ए[7]तदपि मन्दम्। जन्यमात्रे सकर्तृकत्वासिद्धेः। तत्र तत्सिद्ध्यर्थम[8]नुमानान्तरकल्पने गौरवाच्चेति। ननु किमत्र साध्यं न तावत् ज्ञानचिकीर्षासमानाधिकरणकृतिनिष्ठ-विषयताप्रत्यासत्त्यवच्छिन्नकारणतानिरूपितसमवायसम्बन्धावच्छिन्नकार्यत्वं[9] तत्साध्यतावच्छेदककोटौ सामानाधिकरण्यान्तनिवेशे प्रयोजनाभावाद् व्यर्थविशेषणत्वाच्च व्यापकेन व्यर्थविशेषणत्वमिति प्रवादस्य निर्युक्ति-कत्वेना[10]ऽश्रद्धेयत्वात्।

न च मास्तु तन्निवेश इति वाच्यम्। तथा सतीश्वरस्य ज्ञानेच्छयोरसिद्ध्यापत्तेः। न च कृते साक्षाद्विषयतानिरूपकत्वाभावेनेश्वरकृतौ

१. ख उपदर्शित इति न पाठः।

२. ख तथाप्युक्त इति पाठः।

३. ख वारणात् इति पाठः।

४. ख कुत इति पाठः।

५. ख अन्यथा समवेतकार्यं प्रत्येव तस्याहेतुतया उपदर्शितप्रवादो व्याहन्येतेति। तन्न। इति पाठः।

६. ख यत्तु अङ्कुरत्वं द्व्यणुकत्वं नित्यसमवेतत्वमात्रं वा पक्षतावच्छेदकमिति इति पाठः।

७. ख तदपि मन्दमिति पाठः।

८. ख अनुमानान्तरमिति पाठः।

९. ख समानाधिकरणकृतिनिष्ठविषयताप्रत्यासत्त्यवच्छिन्नकारणतानिरूपितसमवायसम्बन्धावच्छिन्न-कार्यत्वे सामानाधिकरण्यांशनिवेशः, प्रयोजनाभावादिति पाठः।

१०. ख निर्युक्तिकतयाऽश्रद्धेयत्वात्।

सविषयकज्ञानसमानाधिकरणेच्छासामानाधिकरण्यरूपपरतन्त्रविषयत्वसम्पत्त्यर्थमीश्वरे ज्ञानेच्छयोरङ्गीकार आवश्यक इति वाच्यम्, जीवनयोनियत्नवत्तादृशकृतेर्निर्विषयकत्वे क्षतिविरहात्। यदि चादृष्टवदात्मसंयोगस्यैव प्राणपञ्चकसञ्चारजनकत्वसम्भवेन जीवनयोनियत्ने मानाभावेन कृतेः सविषयकत्वनियमस्याप्यक्षततया ईश्वरप्रयत्नस्यापि सविषय[1]कतेति विभाव्यते,. तथापि न क्षतिः। कृतौ साक्षादतिरिक्तविषयता[2]भ्युपगमेनैवोपपत्तौ तत्र ज्ञानेच्छयोरङ्गीकारस्य निष्प्रयोजनकत्वात्। न च कृते साक्षाद्विषयित्वस्वीकारे ज्ञानत्वापत्तिः। साक्षाद्विषयितावत्त्वस्य ज्ञानत्वव्याप्यत्वादिति वाच्यम्। तादृशनियमे मानाभावादिति। यत्तु ज्ञानादित्रितयजन्यत्वस्य प्रकृतेः साध्यत्वादीश्वरस्य ज्ञानादिसिद्धिरिति। तन्न, अप्रयोजकत्वात्। अन्वय[3]व्यतिरेकाभ्यां कार्यत्वावच्छिन्नप्रतिकृतित्वेनैव हेतुत्वस्य क्लृप्तत्वात्। न च विनिगमनाविरहात् ज्ञानत्वादिनापि हेतुत्वमायास्यतीति वाच्यम्। [4]तादृशकार्यकारणभावग्राहकान्वयव्यतिरेकाभावात्। अत एव ज्ञानेच्छाकृतिविषयत्व[5]मत्र साध्यत्वमित्यपि परास्तमप्रयोजकत्वात्। इति चेन्मैवम्, उपदर्शितकार्यकारणभावरूपानुकूलतर्क[6]बलेन कृतौ अशरीरिसमवेतत्वातिरिक्तसमवेतत्वबाधसहकृतात् सकर्तृकत्वसाध्यकानुमानात् कार्यत्वावच्छेदेन कृतिजन्यत्वसिद्धौ कृतौ अन्वयव्यतिरेकाभ्यामशरीरिसमवेतत्वातिरिक्तसमवेतत्वबाधसहकृतादियं कृतिः समवेता गुणत्वादित्यनुमानादीश्वरसिद्धौ वेदः[7] सकर्तृकः, उच्चरितवाक्यत्वादित्यनुमानादितरबाधबलात्तत्रेश्वरकर्तृकत्वसिद्धौ तेन वेदस्य प्रामाण्यसिद्धे यः सर्वज्ञः[8] सर्वविद्यस्य ज्ञानमयं तम इत्यादि, सोऽकामयत बहु स्यां प्रजायेयेत्यादिवाक्येभ्य एव इत्यादिश्रुतिवाक्येभ्य एव त[9]स्य ज्ञानेच्छासिद्धेरप्रत्यूहत्वात्।[10] ननु सर्वमिदं सम्भवति कार्यत्वावच्छिन्नं प्रतिकृतित्वेन हेतुत्वे तदेव तु कुत इति चेत्,

१. ख सविषयकत्वमिति पाठः।
२. ख विषयतानिरूपकत्वादुपगमेनैवोपपत्ताविति पाठः।
३. ख अन्वयव्यतिरेकानुविधानाभ्यामिति पाठः।
४. ख तथाविध इति अधिकः पाठः।
५. ख मात्रसाध्यमिति पाठः।
६. ख तर्कवत्त्वेन सकर्तृकत्वसाध्यकानुमानादिति पाठः।
७. ख वेद उच्चरितः, वाक्यत्वाद् इति पाठः।
८. ख यः सर्वज्ञ इत्यादिश्रुतिभ्य एव इति पाठः।
९. ख तस्य सर्वविषयकज्ञानेच्छासिद्धेरप्रत्यूहत्वादिति पाठः।
१०. ख ननु सर्वमिदं सम्भवतीति खपुस्तके नास्ति।

तदेव हि घटपटादिस्थले[1] कुलालादिकृतीनामन्वयव्यतिरेकानुविधानबलाद्[2] घटपटादिकं[3] प्रति कृतित्वेन हेतुत्वे कल्पनीये लाघवात् कार्यत्वावच्छिन्नं प्रत्येव तत्कल्प्यते। न तु घटत्वपटत्वाद्यवच्छिन्नं[4] प्रति, तथा सत्यनन्तकार्य-कारणभावकल्पने गौरवात्।

न च भवन्मतेऽपि कालिकसम्बन्धेन घटत्वादिकमादाय[5] विनिगमनाविरहे घटत्वादिभेदेन कार्यकारणभावभेदस्यावश्यकतया मन्मतेन क्व[6] गौरवावकाश इति वाच्यम्। समवायसम्बन्धेन घटत्वादिविशिष्टं प्रति कृतित्वेन हेतुत्ववादिनामपि विनिगमनाविरहेण तादृशकार्यकारणभावस्य दुरुद्धरतया गौरवस्य दुर्वारत्वादिति विशेषतो अन्वयव्यतिरेकानुविधानबलादपि[7] तादृशकार्यकारणभावसिद्धिः। अन्यथा कार्यत्वावच्छिन्नं प्रति उपादानत्वेनापि हेतुत्वासिद्ध्या निरुपादानककार्योत्पत्ति-प्रसङ्गात्। अत एवात्मतत्त्वविवेके ईश्वरानुमानविवेचनप्रस्तावे[8] निरुपादानक-कार्योत्पत्तिप्रसङ्गादित्याद्युक्तमाचार्यैः।[9] अस्तु वा घटपटत्वाद्यवच्छिन्नं प्रति कृतित्वेन विशिष्य हेतुता, तथापि सर्गाद्यकालीनं घटादिकं पक्षीकृत्य घटत्वादिहेतुना सकर्तृकत्वसाधनेश्वरसिद्धिरप्रत्यूहैवेति। यत्तु जन्यमकर्तृकं शरीराजन्यत्वादि-त्यादिनासत्प्रतिपक्षसम्भवात्, नोपदर्शितानुमानाज्जन्यमात्रे[10] सकर्तृकत्वसिद्धिः। न चात्र शरीरविशेषणस्य व्यभिचारावारकत्वेन व्यर्थत्वान्न तुल्यबलतेति वाच्यम्। तस्य व्यभिचारावारकत्वेऽपि स्वरूपासिद्धिवारकत्वेनैव सार्थकत्वात्। न च व्यभिचारावारकत्वरूपव्यर्थत्वविशिष्टविशेषणज्ञानवत्त्वज्ञानस्य व्याप्तिग्रहविघटकतया स्वरूपासिद्धिः स्वरूपस्य।

अत एवोक्तमाचार्यैरात्मतत्त्वविवेके ईश्वरवादे—एकामसिद्धिं परिहरतो द्वितीयापत्तेरिति वाच्यम्। अधिकोक्त्या व्यर्थविशेषणत्वस्य निग्रहस्थलमात्र-सम्पादकतया तथाविधव्यर्थविशेषणवत्त्वज्ञानस्य[11] व्याप्तिग्रहप्रतिबन्धकत्वे

१. ख घटादिस्थले इति पाठः; २. ख अन्वयव्यतिरेकाभ्यामिति पाठः।
३. ख घटादिकमिति पाठः; ४. ख घटत्वाद्यवच्छिन्नमिति पाठः।
५. ख घटत्वादिमत्वमादायेति पाठः; ६. ख क्व इत्यस्य न पाठः।
७. ख अन्वयव्यतिरेकाभ्यामपि सामान्यकार्यकारणभावसिद्धिः।
८. खपुस्तके विवेचन इत्यस्य पाठो नास्ति।
९. ख कार्योत्पत्तिरित्युक्तमाचार्यैरिति पाठः।
१०. ख नानुमानाज्जन्यमात्रे इति पाठः।
११. खपुस्तके तथाविध इत्यस्य पाठो नास्ति।

मानाभावेन तस्य व्याप्यत्वासिद्धिमत्त्वानाक्रान्ततयाऽनुपपत्तेरभावात्। न च[१] एकामसिद्धिमित्याचार्यलिखनविरोध इति वाच्यम्, आचार्यैरभ्युपेत्य तथोक्तत्वात्। [२]गुरुधर्मस्य व्याप्यतावच्छेदकत्वाभावेन साध्यसम्बन्धितावच्छेदक[३]त्वव्याप्तेस्तस्य प्रतियोगितावच्छेदकत्वाभावत्वस्वरूपत्वे तु यद्धर्मविशिष्टाधिकरणवृत्त्यभाव-प्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकत्वभावघटितव्याप्तेरपि तत्राभावाद-तुल्यबलतया न तेन सत्प्रतिपक्षसम्भव इति वाच्यम्। गुरुधर्मस्य व्याप्यतावच्छेदकत्वाभावे अभाव[४]प्रतियोगितावच्छेदकत्वाभावे वा प्रमाणाभावेन तत्रापि व्याप्तिसत्त्वादिति, तदपि न मनोरमम्,[५] प्रतिस्थापनानुमानप्रयुक्त-हेतोरनु[६]कूलतर्काभावेनाप्रयोजकतया स्थापनानुमानप्रयु[७]क्तहेतोस्तूपदर्शित-कार्यकारणभावरूपानुकूलतर्कसत्त्वेन बलवत्तया सत्प्रतिपक्षासम्भवात्। अत एवात्र स्थापनानुमाने शरीरकर्तृकत्वं शरीरजन्यत्वं वोपाधिरित्यपि प्रत्युक्तम्। उपदर्शित-कार्यकारणभावरूपानुकूलतर्केण कार्यत्वे सकर्तृकत्वव्याप्यत्वनिर्णये तद्वा व्यापकत्वेन शरीरकर्तृकत्वादौ साध्याव्यापकतानुमानसम्भवे साध्यव्यापकतानिर्णया-भावेनोपदर्शितानुपपत्त्यभावादिति। न चो[८]पदर्शितानुमानादीश्वरस्य कृतिसिद्धावपि तस्य नित्यत्वे प्रमा[९]णाभावो[१०] वा इति वाच्यम्। [११]सहकृतोपदर्शितानुमानस्यैव तस्य नित्यत्वे प्रमाणत्वाद् एवमीश्वरज्ञानेच्छयोरपि नित्यत्वं लाघवादेव सिद्धं तयोर्जन्यत्वे ध्वंसप्रागभावादिकल्[१२]पने गौरवात्। एवं तत्र प्रत्येकमेकत्वमपि लाघवात् सिद्धमिति वाच्यम्। अत एवेश्वरस्य शरीरे बाधकाभावात् तदीयज्ञानादित्रयमपि जन्यमि[१३]त्यपि परास्तम्। ईश्वरस्य भोगाभावेन सुखदुःखादिसाक्षात्काररूपभोगावच्छेदकस्य शरीरस्य तत्र कल्पनाया असम्भवाच्च। न च शरीरत्वं जातिरिति वाच्यम्। तैजसशरीरादिवृत्तिशरीरत्वस्य घटपटादिवृत्तिपृथिवीत्वादिना साङ्कर्येण जातित्वाभावात्। (तथाविधपृथिवीत्वादिसाङ्कर्येण तदसम्भवात्) न च

---

१. ख न चाचार्यवचनविरोध इति वाच्यम्; २. ख न च इत्यधिकः पाठः।
३. ख अवच्छेदकलक्षणाव्याप्तिः इतिं पाठः; ४. खपुस्तके अभावपदस्य पाठो नास्ति।
५. खपुस्तके मनोरममिति न पाठः।
६. खपुस्तके अनुकूलतर्काभावेन इत्यस्य न पाठः।
७. ख प्रयुक्त इत्यस्य न पाठः; ८. ख ननूक्तानुमानादीश्वरस्येति पाठः।
९. ख मानाभाव इति पाठः; १०. ख इति भाव इति अधिकः पाठः।
११. ख कृतेर्नित्यत्वे लाघवमिति लाघवतर्कसहकृतानुमानेनैव तत्सिद्धेः, एवं ज्ञानेच्छयोरपि नित्यसिद्धिरूहनीया इति पाठः।
१२. ख कल्पनागौरवादिति पाठः; १३. ख जन्यमिति निरस्तमिति पाठः।

पृथिवीत्वादिव्याप्यविरुद्धभेदेन शरीरत्वनानात्वाङ्गीकारान्नानुपपत्तिरिति वाच्यम्। तथा सति चेष्टां प्रति शरीरहेतुताया अननुगमेन व्यभिचारात्। तथा[१]विधनानाजातिकल्पने गौरवाच्च। अत एव शरीरैकत्वनिष्ठजातिविशेषं कल्पयित्वा चेष्टात्वावच्छिन्नं प्रति विजातीयैकत्ववत्त्वेन हेतुत्वकल्पनान्नानुपपत्तिरित्यपि परास्तम्। तथाविधजाते[२]: परिमाणादिनिष्ठतामादाय विनिगमनाविरहेणानन्तजातिकल्पनापत्तेश्च। न च भोगावच्छेदकत्वं शरीरत्वमिति मतेऽपि सुखाद्यवच्छेदकत्वमादाय विनिगमना[३]विरह इति वाच्यम्। विजातीयैकत्ववत्त्वं शरीरत्वमिति मतेऽपि अवच्छेदकतासम्बन्धेन भोगसुखादिमत्त्वमादाय विनिगमनाविरह[४]स्य दुर्वारतया तथाविधातिरिक्तजातिकल्पना-प्रयुक्तगौरवस्य पुनः[५] दुरुद्धरत्वादिति। अनया दिशा[६] अथेश्वरस्य शरीराभावे अङ्कुरादि[७]कार्योत्पत्तिभिः पूर्वं चेष्टात्वेन हेतुतानुपपत्तौ व्यभिचारादिति चेन्न, तथाविध-हेतुहेतुमद्भावे क्षतिविरहात्। विशिष्य घटत्वाद्यवच्छिन्नं प्रत्येव तस्याहेतुत्वात्। अत एवेश्वरस्य परमाणुरूपाणि नानाशरीराणि, न तु स्थूलसूक्ष्मशरीर[८]मेकम्। ईश्वरे[९] पाषाणमध्यवर्तिभेद[१०]कशरीरकर्तृकत्वानुपपत्तेः। तत्राभग्नस्य स्थूलशरीरस्य प्रवेशासम्भवात्। अत एवात्म[११]तत्त्वविवेके ईश्वरवादे अदृश्यस्यापि सावयवतया मूर्त्ततया च व्यवस्थापितत्वेन पाषाणमध्यवर्तितादृशशरीरादौ कार्ये कर्त्तव्येनाभग्नस्य प्रवेश इत्युक्तमाचार्यैः। न चेश्वरस्य परमाणुरूपशरीराङ्गीकारे तस्यान्तरालाभावेन निर्मनस्कतापत्तिरिति वाच्यम्। तस्या बहिर्वर्त्तिमनःसम्बन्धाङ्गीकारेणान्तरालिक-निर्मनस्कतायामिष्टापत्तेः, एवं गोलकाद्यभावेन तत्र बहिर्वर्त्तिचक्षुरादीन्द्रियसम्बन्धोऽपि स्वीक्रियते। एवं चेश्वरस्य ज्ञानादिकं जन्यमेव तत्कारणीभूतशरीरमनोयोगादेः सम्भवादित्यपि निरस्तम्[१२]। प्रयत्नवदात्मसंयोगासमवायिकारणक-क्रियाश्रयान्त्यावयवित्वरूपशरीरलक्षणस्य परमाणावसम्भवेन शरीरत्वाभावाच्च। यदि चान्त्यावयवित्वमनिवेश्यैव तल्लक्षणमिति विभाव्यते, तथापि नेश्वरस्य परमाणुरूपनानाशरीरसिद्धिः[१३]। तथाविधानन्तशरीरकल्पने तज्ज्ञानादिजन्यत्वकल्पने च गौरवात्।

---

१. ख तथाविध इत्यस्य न पाठः; २. ख तादृशजातेरिति पाठः।
३. ख ग विनिगमनाभाव इति पाठः; ४ ख ग विनिगमनाभावस्य इति पाठः।
५. ख ग पुनः इति पाठो नोपलभ्यते; ६. ख ग अनया दिशा इति पाठो नास्ति।
७. ख ग अङ्कुराद्युत्पत्तिभिः; ८. ख ग शरीरात्मकम्।
९. ख ग ईश्वरस्य; १०. ख ग भेदशरीरकर्तृत्वानुपपत्तेः।
११. ख ग अत एवात्मतत्त्वविवेके; १२. ख ग परास्तम्।
१३. ख ग अनन्तत्वाभावाच्च। यदि च शरीरकल्पने ज्ञानादेरन्यत्वकल्पने च गौरवात्।

वस्तुतस्तु जन्यं[१] सकर्तृकं कार्यत्वादित्यनुमानात् ज्ञानादेर्नित्यत्वे लाघवमिति, लाघवादिज्ञानसहकृतादीश्वरस्य नित्यज्ञानादिसिद्धौ तत्र जन्यज्ञान-कल्पनप्रसक्तिर्नास्तीति ईश्वरस्य शरीरकल्पनमनर्थकमेवेत्युक्तम्[२]। एतेनेश्वरस्यैकमेव परमाणुरूपं शरीरं तत्सम्बन्धीश्वरो दूरस्थमपि कार्यं करोतीत्यादिकमपि परास्तम्[३]। शरीरिप्रयत्नवदात्मसंयोगाव्यवहितोत्तरोत्पन्नतत्पदार्थक्रियां प्रति शरीरसंयुक्त-तत्तत्पदार्थवृत्तिप्रयत्न[४]वदात्मसंयोगस्य हेतुताया एवान्वयव्यतिरेकानुविधानबलात् क्लृप्ततया तस्याभावेन दूरवर्तिपदार्थे क्रियाया अनुत्पादासम्भवाच्च। अत एव उदयनाचार्यैः 'न च (दूरस्थ एव) दविष्ठ एव सूर्यादिस्तत्कुर्यादिति साम्प्रतमिति ग्रन्थेनेश्वरस्य परमाणुरूपशरीरं ततो दूरस्थमपि कार्यं करोतीत्याशङ्क्य कारकानधिष्ठानादित्यनेन तथैव समाहितमिति तस्मादुपदर्शितानुमानात् शरीरानवच्छिन्नैव कृतिरसि[५]द्धेदिति तदाश्रयत्वेनेश्वरोऽपीति साम्प्रदायिकाः।

नवीनै[६]स्तु ईश्वर[७]सिद्धौ प्रकारान्तरेण युक्तिरुपन्यस्यते तथा हि पटादौ चक्षुः संयोगादिदशायां घटादिचाक्षुषवारणाय घटादिवृत्तिविषयतासम्बन्धेन प्रत्यक्ष[८]त्वावच्छिन्नं प्रति घटादिवृत्तिविषयतासम्बन्धेन ज्ञान[९]त्वेन हेतुरवश्यमुपेयः। तथा च घटनिर्विकल्पकात् पूर्वतादृशहेतुसम्पत्त्यर्थमीश्वरज्ञानस्वीकार आवश्यकः, तदाश्रयत्वेनेश्वरसिद्धिः। न च घटादि[१०]चाक्षुषत्वादेः कस्यचित् कार्यता[११]नवच्छेदकतया न तदवच्छिन्नापत्तिसम्भवेन तद्वारणायोक्तकार्यकारणभावस्यावश्यकत्वात्। न च तद्वारणार्थं घटादिवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति घटत्वादिना

---

१. ख ग जन्यं सकर्तृकं कार्यत्वादित्यनुमानात् ज्ञानादेर्नित्यत्वे लाघवमिति लाघवज्ञानसहकृता-दिति पाठो नोपलभ्यते।

२. ख ग मेवेति ध्येयम्;

३. ख ग निरस्तम्।

४. ख ग प्रयत्नवदात्मसंयोगाव्यवहितोत्तरोत्पन्नतत्पदार्थक्रियाया उत्पादासम्भवाच्च, अत एवाचार्यैः। न च दूरस्थ एव सूर्यादिस्तत्कुर्यादिति साम्प्रतमिति ग्रन्थेनेश्वरस्य इति पाठः।

५. ख ग कृतिः सिध्यति।

६. ख ग नवीनाः पुनः पटचक्षुःसंयोगदशायां घटादिचाक्षुषवारणाय।

७. ख ग ईश्वरसिद्धौ प्रकारान्तरेण युक्तिरुपन्यस्यते, तथा हि. इति पाठो नोपलभ्यते।

८. ख ग ज्ञानमिति पाठ उपलभ्यते।

९. ख ग ज्ञानमिति पाठः।

१०. ख ग घटचाक्षुषत्वस्य कस्यचित्।

११. ख ग कार्यतावच्छेदकतयेति पाठोऽप्रामाणिकः प्रतिभाति।

घटविषयस्यैव हेतुत्वमस्त्विति वाच्यम्। एवमपि घटत्वादौ संयुक्त[१]समवायकाले घटत्वादिस्पार्शनापत्तिवारणाय घटत्वादिवृत्तिविषयतासम्बन्धेन प्रत्यक्षं प्रति घटत्वादिवृत्तिविषयतासम्बन्धेन ज्ञानत्वेन कारणत्वकल्पनस्यावश्यकत्वात्। आश्रयभासकसामग्रीं विनापि तादृशकारणबलाद् वायुस्पर्शस्यास्पार्शनोत्पत्त्या आश्रयभासकसामग्र्याः सहकारित्वकल्पनाया असम्भवात्। न च स्पर्शवृत्तिविषयतासम्बन्धेन स्पार्शनं प्रति स्पर्शत्वेन हेतुतामङ्गीकृत्य स्पर्शस्पर्शाश्रयभासकसामग्र्यन्यतरस्य तत्र सहकारित्वाभ्युपगमेनैव सर्वसामञ्जस्ये उपदर्शितकार्यकारणभावोऽपि युक्तिकर[२] इति वाच्यम्। तथा सति पटत्ववान्[३] पटत्वाभाववानित्यादि[४]शाब्दबोधानुमित्यादिवारणाय पटत्वान्य[५]वृत्तिविषयतासम्बन्धेन ज्ञानं प्रति पटत्वाभावो[६]पहितहेतुताकल्पने गौरवप्रसङ्गाच्च[७]। पटत्वादिवृत्ति[८]विषयतासम्बन्धेन ज्ञानं प्रति पटत्वावृत्तिविषयतासम्बन्धेन[९] हेतुताकल्पनेऽपि तु[१०] नोक्तापत्तिः। धर्मितावच्छेदकतासम्बन्धेन पटत्वा-[११]प्रकारकयोग्यताज्ञानेन पटत्वव्याप्यवत्ताज्ञानेन[१२] च फले जननीये पटत्वादिवृत्ति-[१३]विषयतासम्बन्धेन ज्ञानस्य सहकारित्वाभ्युपगमात्। न च पटत्वादि-[१४]वृत्तिविषयतासम्बन्धेन ज्ञानं प्रति पटत्वादिना[१५] हेतुतयैव सर्वानुपपत्तिवारणसम्भवात्,

---

१. ख ग त्वक्संयुक्तसमवायकाले।

२. ख ग युक्तिक इति पाठः।

३. ख ग घटत्ववान्।

४. ख ग घटत्वाभाववानित्यादि।

५. ख ग घटत्वान्य इति पाठ उपलभ्यते।

६. ख ग घटत्वाभावो।

७. ख ग च इति पाठो नोपलभ्यते।

८. ख ग घटत्वादिवृत्ति।

९. ख ग तु इति पाठो नास्ति।

१०. ख ग घटत्वाप्रकारक।

११. ख ग घटत्वव्याप्यवत्ता।

१२. ख ग घटत्वादिवृत्ति।

१३. ख ग घटत्वादिवृत्ति।

१४. ख ग घटत्वादिना।

१५. ख ग घटत्वादिना।

किं पटत्वादिवृत्तिविषयतासम्बन्धे[१] ज्ञानहेतुतयेति वाच्यम्। पटत्वत्वे[२] वृत्तिविषयतया पटत्वादिवृत्तिविषयतासम्बन्धेन[३] ज्ञानं प्रति तेन सम्बन्धेन ज्ञानत्वेन लघुरूपेण हेतुताकल्पनाया एव न्याय्यत्वात्। एवञ्च तादृशकार्यकारणभावसहकृतात् सर्गाद्यकालीनपटत्वादिनिर्विकल्पकं[४] ज्ञानजन्यं निर्विकल्पकत्वादिदानीन्तन-निर्विकल्पकवदित्यनुमानादेकनित्यज्ञानसिद्धौ तदाश्रयत्वेनेश्वरः कल्पनीय इति वदन्ति।

**।। इति रघुदेवकृत ईश्वरवादः सम्पूर्णः ।।**



१. ख ग घटत्वादि।

२. ख ग घटत्वत्वे।

३. ख ग घटत्वादि इति पाठ उपलभ्यते।

४. ख ग घटत्वादि इति पाठ उपलभ्यते।

## परिशिष्टम्-क

## ग्रन्थे समुद्धृताः केचन सिद्धान्ताः कार्यकारणभावाश्च


१. समवायसम्बन्धेन कार्यत्वावच्छिन्नं प्रति विषयतासम्बन्धेन प्रत्यासत्त्यैव कृत्यादेर्हेतुता। पृष्ठसंख्या १६

२. कार्यसामान्यं प्रति ईश्वरकृतिः कारणम्। १७

३. साक्षाद् विषयितात्वस्य ज्ञानत्वव्याप्यत्वात्। १८

४. अन्वयव्यतिरेकाभ्यां कार्यत्वावच्छिन्नं प्रति कृतित्वेनैव हेतुत्वम्। १८

५. निरुपादानककार्योत्पत्तिप्रसङ्गात्। १९

६. गुरुधर्मस्य व्याप्यतावच्छेदकत्वाभावेन साध्यसम्बन्धितावच्छेदकत्वव्याप्तेः। २०

७. कार्यत्वं सकर्तृकत्वव्याप्यम्। २०

८. अदृश्यस्यापि सावयवतया मूर्त्ततया च। २१

९. प्रयत्नवदात्मसंयोगासमवायिकारकक्रियाश्रयान्त्यावयवित्वरूपशरीरलक्षणम्। २१

१०. शरीरिप्रयत्नवदात्मसंयोगाव्यवहितोत्तरोत्पन्नतत्पदार्थक्रियां प्रति शरीरसंयुक्ततत्तत्पदार्थवृत्तिप्रयत्नवदात्मसंयोगस्य हेतुता। २२

११. घटादिवृत्तिविषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति घटदिवृत्तिविषयतासम्बन्धेन ज्ञानत्वेन हेतुत्वम्। २२

१२. स्पर्शवृत्तिविषयतासम्बन्धेन स्पार्शनं प्रति स्पर्शत्वेन हेतुता। २३

१३. पटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति पटत्वाभावोपहितहेतुता। २३

१४. पटत्वादिवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति पटत्वावृत्तिविषयतासम्बन्धेन हेतुता। २३

## परिशिष्टम्-ख

# प्रकीर्णानि

### (क) ग्रन्थे समुद्धृतानां दोषाणां सूची

१. व्यभिचारः।

२. स्वरूपासिद्धिः।

३. भागासिद्धिः।

४. व्याप्यत्वासिद्धिः।

५. सत्प्रतिपक्षः।

### (ख) ग्रन्थे समुद्धृतानि वेदवाक्यानि

१. यः सर्वज्ञः स सर्वविद्। पृ. १५।

२. यस्य ज्ञानमयं तपः तस्मादेतद् ब्रह्मनामरूपमन्नं च जायते। पृ. १५।

३. सोऽकामयत बहु स्यां प्रजायेय। पृ. १८।

### (ग) ग्रन्थे चर्चिता केचन ग्रन्थकाराः, विचारका वा, तेषां वाक्यानि

१. 'एकामसिद्धिं परिहरतो द्वितीयापत्तेः' पृ. १९।
आत्मतत्त्वविवेकः, पृष्ठसंख्या ३८८;
सम्पादकः—डॉ. केदारनाथत्रिपाठी, वाराणसी, १९८३।

२. 'न च दविष्ठ एव सूर्यादिस्तत्कुर्यादिति साम्प्रतम्, कारकानधिष्ठानात्'।
आत्मतत्त्वविवेकः, पृ. ४२६;
सम्पादकः—डॉ. केदारनाथत्रिपाठी, वाराणसी, १९८३।

३. यत्तु, पृ. १७, १९।

४. भवन्मतेऽपि, पृ. १९।

५. आचार्याः, पृ. १९, २१।

६. उदयनाचार्याः, पृ. २२।

७. नवीनाः, पृ. २२।

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञ-विचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. **''वित्त अधिकारी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२** (उ.प्र.)'' इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल-आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः **''सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२** (उ.प्र.)'' इति सङ्केतेन विधेयः।



पञ्जीकरणसंख्या—६९८१/५७

# सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **कातन्त्रव्याकरणम्** : आचार्यशर्ववर्मप्रणीतो व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थः श्रीदुर्गसिंहकृताभ्यां **कातन्त्र-वृत्ति-टीकाभ्यां**, श्रीमत्त्रिलोचनदासकृतया **'कातन्त्रवृत्तिपञ्जिका'**टीकया, कविराजसुषेणशर्मकृतया **'कलापचन्द्र'**टीकया, अथ च डॉ. जानकीप्रसादद्विवेदिकृतया **समीक्षया,** विवरणात्मिकया भूमिकया, अनुसन्धानात्मक-परिशिष्टैश्च सनाथीकृत्य सुसम्पाद्य प्रकाशितः — प्रथमो भागः ३५०.००
द्वितीयो भागः खण्डम्-१ ५००.००
द्वितीयो भागः खण्डम्-२ ६००.००

२. **परशुरामकल्पसूत्रम्** : तन्त्रशास्त्रस्य सूत्रात्मकोऽयं ग्रन्थस्तन्त्रसिद्धान्तैः सह सर्वासामुपासनानां प्रतिपादकोऽस्ति। श्रीरामेश्वरवृत्तेर्मुख्यांशेन समलङ्कृतो **नीरक्षीरविवेका**भिधेन **भाषाभाष्येण** संवलितः प्रो. विद्यानिवासमिश्रैः, डॉ. परमहंसमिश्रैश्च सुसम्पाद्य प्रकाशितः — २८०.००

३. **सौभाग्यरत्नाकरः** : तन्त्रशास्त्रस्य समृद्धोऽयं ग्रन्थः श्रीविद्यानन्दनाथविरचितः सौभाग्यसंवर्द्धनस्य सदुद्देश्येन तरङ्गायितः श्रीविद्यायाः सम्प्रदायसिद्धानां राद्धान्तानां समुपासनपद्धतीनाञ्च प्रतिपादको रत्नाकरसदृशो विराजते। स्वात्मविमर्शाख्यया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पाद्य प्रकाशितः— ३५०.००

४. **प्राणतोषिणी** : श्रीरामतोषणभट्टाचार्येण प्रणीतस्तन्त्रशास्त्रस्य महनीयोऽयं ग्रन्थः। अस्य प्रथमभागस्य विषयवस्तु सर्ग-धर्म-अर्थेति काण्डत्रयेण विभज्य प्रस्तुतम्। ग्रन्थोऽयं सुविस्तृतया भूमिकया समलङ्कृत्य डॉ. हरिवंशकुमारपाण्डेयेन सुसम्पाद्य प्रकाशितः— प्रथमो भागः ४५०.००

५. **जैमिनीयं सामगानम्** : जैमिनिमुनिना प्रणीतं ग्रन्थरत्नमिदं द्वितीयसंस्करणात्मकं प्रकाशतामानीतम्। ग्रन्थेऽस्मिन् सामगानस्यानेकेषां छन्दसामुपबृंहणमस्ति। ग्रन्थोऽयं श्रीरामनाथदीक्षितस्य विस्तृतया भूमिकया सुशोभितोऽस्ति— २००.००

६. **केदारखण्डः** : स्कन्दपुराणीयमाहेश्वरखण्डान्तर्गतकेदारखण्डस्य प्रकाशनं प्रो. वाचस्पतिद्विवेदिनो **हिन्दीभाषानुवादेन** सह कृतमस्ति। पौराणिककथानकैः सत्कर्मणो भगवत आशुतोषस्य भक्तिभावनायाः सततं प्रेरणाप्रदाने पूर्णरूपेण सक्षमोऽयं ग्रन्थः। प्रो. द्विवेदिनो विस्तृतया भूमिकया सनाथितोऽयं प्रकाशितः— प्रथमो भागः ४६०.००

७. **सात्वतसंहिता** : वैष्णवतन्त्रस्य मूर्धन्यतमोऽयं ग्रन्थः अलशिङ्गभट्टस्य व्याख्यया सनाथितः प्रकाशतामानीतः। श्रीव्रजवल्लभद्विवेदिना सम्पादितस्य सभाष्यस्य ग्रन्थस्यास्य द्वितीयं संस्करणं प्रस्तूयते— ३६०.००

८. **श्रीमालिनीविजयोत्तरतन्त्रम्** : तन्त्रशास्त्रस्य ग्रन्थोऽयं डॉ. परमहंसमिश्रस्य **'नीरक्षीरविवेक'**भाषाभाष्येण समलङ्कृत्य प्रकाशतामानीतः। ग्रन्थोऽयं सम्पूर्णाध्वावर्गोपरि स्वकीयां स्वतन्त्रां दृष्टिं प्रस्तौति। स्वात्मविमर्शात्मिकया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पादितोऽयं ग्रन्थः प्रकाशितः— २४०.००

९. **बौद्धदर्शन और मार्क्सवाद** (परिसंवाद-६) : विश्वविद्यालयस्यास्य श्रमणविद्यासङ्कायेन समायोजितायां सङ्गोष्ठ्यां विश्रुतैर्विद्वद्भिः पठितानां विशिष्टनिबन्धानां सङ्कलनं विहितम्। संस्कृत-हिन्दी-आङ्ग्ल-भाषामयान् निबन्धान् सङ्कलय्य डॉ. रमेशकुमारद्विवेदिना सम्पादितोऽयं ग्रन्थः प्रकाशितः— ३६०.००

१०. **मैत्र्युपनिषद्** : श्रीरामतीर्थविरचितया **'दीपिका'**ख्यसंस्कृतव्याख्यया, प्रो. ओमप्रकाशपाण्डेयेन सनाथितया **हिन्दीव्याख्यया** विस्तृतया भूमिकया सम्भूष्य सम्पाद्य च प्रकाशितोऽयं ग्रन्थः— १८०.००

११. **श्रीमद्भागवत में सांख्ययोग के तत्त्व : एक परिशीलन** : श्रीमद्भागवतस्य दार्शनिकविश्लेषणात्मकोऽयं ग्रन्थः प्रो. विमलाकर्नाटकमहोदयाभिर्हिन्दीभाषायां प्रणीतः। दर्शनेतिहासाख्यपटलद्वयेन विभक्तोऽयं ग्रन्थो विस्तृतया भूमिकया परिशिष्टादिभिश्च सम्भूष्य सम्पाद्य च प्रकाशितः— ४००.००

१२. **तत्त्वबिन्दुः** : श्रीवाचस्पतिमिश्रप्रणीतोऽयं ग्रन्थः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य विश्वविश्रुतस्य सरस्वतीभवन-पुस्तकालयस्य हस्तलिखितपाण्डुलिपिमाधारीकृत्य डॉ. रजनीशकुमारशुक्लेन सम्पादितः प्रकाशतामानीतः— १२०.००

१३. **शिवलीलार्णवः** : महाकविना श्रीनीलकण्ठदीक्षितेन प्रणीतं द्वाविंशसर्गात्मकं महाकाव्यमिदं भगवतः शिवस्य चतुष्षष्टिलीलानां लालित्यपूर्णं वर्णनं प्रस्तौति। सुविस्तृतया भूमिकया विविधैः परिशिष्टैश्च सम्भूष्य डॉ. ददन-उपाध्यायेन सम्पादितमिदं महाकाव्यं प्रकाशितम्— २००.००

***पत्रव्यवहारसङ्केतः***— **निदेशकः,** प्रकाशनसंस्थानस्य, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी-२२१००२